❀ श्रीः ❀

महाकवि-श्रीमदम्बिकादत्तव्यास-प्रणीतः

# शिवराज-विजयः

( द्वादश निश्वासात्मकः, संपूर्णः )

व्याकरण-साहित्य-मीमांसाद्याचार्येण

पं० श्रीरामजीपाण्डेयशास्त्रिणा

विरचितया वैजयन्त्या

साहित्याचार्य-

पं० श्रीश्रीकृष्णपन्तविरचित-निश्वासद्वय-

भाषानुवादेन च

विभूषितः ।



संशोधकः-

पं० श्रीजितेन्द्रियाचार्यः

प्रकाशकः—

गणेश-पौत्रः स्वर्गीय-श्रीराधाकुमार-व्यास-तनयः

श्रीकृष्णकुमारव्यासः

श्रीश्रीगौरकृष्णः शरणम् ।

# संस्तवनीयं किञ्चिद्

## संस्तावकः—श्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्य-दर्शनाद्याचार्यतर्करत्नन्यायरत्नदामोदरगोस्वामी

कर्णाकर्णिकयाऽऽकर्णितमेतद् विंश्या वैक्रम्याः शताब्द्याः पूर्वार्धेऽधिवाराणसि गौडभूसुरवंशजन्मा व्यासोपनामा श्रीमदम्बिकादत्तशर्माऽऽसीद् । यश्च विलक्षणसंस्कारशालित्वेन शैशव एवाऽऽकृतिभाषणादितोऽसाधारणपटिमाऽयं भवितेति निरधारि लोकैः । यं च क्रमेणैधमानं विधापितविद्याऽऽरम्भं गुरुजना व्याकरणाद्यध्यापकसविधे किल तत्तद्विषयाधिजिगापयिषयोपातिष्ठिपन् । येन चाध्यापकेभ्यो व्याकरणमधीत्य शास्त्रान्तरेऽपि व्युत्पद्य, साहित्येऽधिकां रुचिं तन्वता काव्यनिर्माणयोग्यतामासाद्य समस्यापूर्त्यादिषु चमत्कृतिं ख्यापयताऽनेकावधाननैपुणीं लोकान् प्रदर्शयताऽनतिविलम्बेन विसृत्वराऽधिगता खलु ख्यातिः । यस्मै च विद्यारसिका विपश्चितोऽन्तेवासिनोऽपरे च गुणगृह्या जना बाहुल्यादात्मनीनतया स्पृहयाम्बभूवुः । यस्मान्नैकविधाः कौतूहलविशेषाश्चतुःषष्टिकोष्ठीखेलाप्रभृतिनिबन्धनाः प्रकाराः प्रकटतामीयुः । यस्य विद्यासध्रीचीनाः परेऽपि गुणाः सौजन्यास्तिक्यप्रश्रयक्षमोपकारादयः प्रतिदिनमुदित्वरतां जिहाना लोकं विस्मेरतां नयन्तो नैव विरेमुः । यस्मिन्नन्ये च वैषयिका नृपतिश्रेष्ठिनागरिकादयोऽनुदिनमुदयमानां प्रीतिं भेजुः ।

ईदृग्विधोऽसौ पुरुषतल्लजः कदाचिदन्तर्यामिप्रेरणया तादृशपुस्तकं प्रणिनीषुर्विचारयन्नेव बंहीयांसमनेहसमयापयद्, यादृशं कर्तृयोग्यतापरिचयालंभूष्णु स्थास्नु वर्त्तमानजनतायै रोचिष्णु पाठकसार्थचेतांसि गृहयालु बोभूयेत । नानाविचारसौधपरम्परामध्युष्य समयस्रोतोऽनुधाविनीं जागतीं प्रवृत्तिं परिशीलयन् स्थाने नन्विदं निरदीधरद्, यत्सम्प्रति लोकाः प्रायो जिज्ञासाविधुराः, केषुचित्सत्स्वपि तदुन्मुखेषु वित्तैषणाताडिताः प्रचञ्चूर्य्यमाणां राजभाषामधिजिगमिषवः, प्राक्तनसुकृतसंभारमहिम्ना सुरगिरि प्रसितचेतसोऽल्पे, तत्र च महानर्घामिव कस्यां प्रतोल्यां के पर्य्यटाट्याप्रवणाः,कथमिव ते सुज्ञानाः स्युः ? तथाऽपि सामयिकरुचिसध्रीचीनात् परामर्शादविरमाव्यनेन निष्कर्षेण, यददभ्रतया

लोकाः सुकुमारमतयो विनोदप्रिया नवीनेतिहासावगमोन्मनसो जाग्रति; सुतरामेभ्यो रुचिकरमितिहासघटितं काव्यं यथा भवेन्न तथेतरविषयिका रचनाः। परंतु काव्यस्य पद्यात्मकत्वे छन्दोरीतिमुखावलोकदाक्षिण्यमुद्दामवाचोऽपि कवीन् मन्थरयत्येवापेक्षाकृतमित्यनुभावसाक्षिकमेतत्। ततश्च गद्यात्मकेनैनेन कोमलधिषणाः सुरञ्जनाः स्युः, किन्त्वेष्वपि त एव सुखाकर्षा येषां मुग्धा धियो वासवदत्ताकल्पसर्वपथीनारण्यानीचङ्क्रमणपरिश्रान्तिभीरवः, हर्षचरितादिजातीयकोमलत्वधैर्यपाटच्चरत्रस्नवः, कादम्बर्य्यादिदेशीयसौरसैन्धवप्रवाहनिमज्जनचकिताः, दशकुमारचरितसब्रह्मचारिनानाविधगहनवर्त्मान्वेषणावधानखेदालसाः, समञ्जसतया तादृगधिकारिणां कृते मयाऽऽसेचनकमुपस्करणीयमिति मीमांसमानः प्रकृतः कविः सताराधराऽधीश्वरं समुदेष्यदसह्यप्रतापं घूकपाशानां तिग्मरश्मिमिव सज्जनजीवकदम्बानां राकासुधाकिरमिव तदानीन्तनसाधकवृन्दवृन्दारकमहानुभावाग्रणी – राजनीतिकुटिलकान्तारकण्ठीरवदयाक्षमावात्सल्यादिकल्याणगुणशेवधि-प्रातःस्मरणीयसमर्थश्रीरामदासगुरुचरणसरोजपरागशुण्कीकृताभीलवारिधिं साकारमिव शौर्य्यं श्रीशिवराजमहोदयं नायकीकृत्य तदीयविजयचरितगुम्फितं गद्यकाव्यं शिवराजविजयनामकमन्वर्थं रचयितुं निरचैषीत्।

मुख्यप्रतिनायकश्चात्र मोगलसम्राजोऽकबरस्य प्रपौत्रो, जहाँगीरसम्राजः पौत्रः, शाहजहाँसम्राजः पुत्रः, सनातनधर्मपारिजातवनस्य दवदहनः, तदानीन्तनदिल्लीश्वर औरंगजेबापरनामक आलमगीरसम्राट्। तत्कर्मकश्छत्रपतिकोङ्कणेशश्रीशिवराजसिंहकर्तृको विजयोऽत्र प्रधानप्रतिपाद्यविषयः, वीररसोऽत्र मुख्यः, रसालपाकसरसाऽत्रत्या कविता।

द्वादशभिर्निश्वासैर्निश्वासचतुष्टयघटितैस्त्रिभिर्विरामैः पूर्णः काव्यकर्त्तुः पौत्रेण सौजन्यादिगुणभूषितेन श्रीकृष्णकुमारव्यासेन पूर्वसंस्करणेभ्योऽपि परिष्कार्य प्रकाशितो निबन्धोऽयं वर्त्तमानसमये सुगमत्वेन व्युत्पादकतया शिक्षाप्रदत्वेन रोचकतया च नव्येतिहासप्रियाणां विशेषतश्चाधिजिगांसूनां परमोपकारको नात्र मात्रयाऽपि संशयलेशः। मानुष्यकनान्तरीयकादीनवास्तु सर्वत्रैवोदारहृदयैर्मरालशीलैः सोढव्यताभाज एवाऽऽकलनीयाः, नेह किमपि कस्यापि विवक्षितव्यमिति शम्।

—विजयदशमी, २००२, काशी।

❀ श्रीः ❀

# निर्माणहेतुः

"गद्यं कवीनां निकषं वदन्ति"

श्लोक एकस्याप्यंशस्य चमत्कार-विशेषाधायकत्वे सर्वोऽपि श्लोकः प्रशस्यते, न च गद्ये तथा सुलभं सौष्ठवम्। गद्ये तु सर्वाङ्गीण-सौन्दर्यमुपलभ्येत चेत्; तदैव तत् प्रशंसा-भाजनं भवेद् भव्यानाम्। पद्ये छन्दःपारवश्यात् स्वच्छन्द-पद-प्रयोगो न भवतीत्यनिच्छताऽपि कविता-प्रसङ्ग-प्राप्तं स्वाभाविकं स्वल्पमपि वचनीयं क्वचिद् विस्तार्यते, क्वचिद् बह्वपि नियताक्षरैः संक्षिप्य क्षोदिष्ठं विधीयते, क्वचिच्च द्वित्र-स्वाभाविक-पद-प्रयोग-समापनीयान्यपि पारस्परिकालाप-संसक्त-प्राप्त-वाक्यानि जटिलीक्रियन्ते। गद्ये तु यदि किमपि तादृशमस्वाभाविकं स्यात्; तत् कवेरेव निर्बक्ति महदवद्यम्—इत्यादिकारणैः पद्यापेक्षया गद्यमेव महामान्यं भवति, भवति च दुष्करमपि गद्य-काव्यमेव। अत एव शुद्ध-पद्यात्मकेषु बहुषु महाकाव्येष्वपि खण्डकाव्येष्वपि च प्राप्येष्वपि गद्यपद्यात्मकेषु चम्पू-नाटकादिषु चानेकेषूपलभ्यमानेष्वपि, शुद्ध-गद्य-काव्यानि तथा नाऽऽसाद्यन्ते। अस्माकं महामान्या धन्याः सुबन्धु-बाण-दण्डिनो महाकवयो ये वासवदत्ता-कादम्बरी-दशकुमारचरितानि सुधामधुराणि सदा सदनुभाव्यानि गद्यकाव्यानि विरचय्य भारतवर्षं सबहु-प्रमोद-वर्षं व्यधिषत; येषां चोक्ति-पर्य्यालोचन-प्राप्त-पर्य्याप्त-व्युत्पत्तयोऽसङ्ख्याश्छात्रा अद्यापि वर्तन्ते, वर्तिष्यन्ते च चिराय। पूर्वैर्भट्टार-हरिचन्द्र-प्रभृतिभिरेतैर्महाकविभिश्च प्रचारि-

तोऽपि महाकाव्य–सञ्चारो न चिराय स्थितिमकलयत्। भारताभिजनभाषा–कविभिरपि च प्रायः पद्य–प्रकृतिकैरेव समभावि–इति जगत्प्रसिद्धेः सूरदास–प्रभृतिभिरपि पद्यान्येव निबद्धानि। साम्प्रतन्तु समय–महिम्ना भारतीय–वर्तमान–भाषासु बहुधा गद्यकाव्यानि विरच्यन्ते। वङ्ग–गुर्जरादि–भाषासूपन्यासैरेव व्याप्ता विपणयः। हिन्दीभाषाऽपि च प्रत्यहमतिशयमासादयति गद्यसोपानेष्वेव पदाधाने। परं न केवलं प्राकृतिक–गिरां गुरवो गीर्वाणगिरि व्युत्पत्तिगरीयांस उपलभ्यन्ते, न वा कांश्चिद् धन्य–धन्यान् विहाय संस्कृतसाहित्य-व्युत्पन्ना एव, इतर-भाषानुरक्ता विशेषतोऽवलोक्यन्ते। अत एव भारताभिजन-भाषा-कवयः प्रायः स्वभ्रमान् साक्षात्संकृतसाहाय्येन शोधयितुं न पारयन्ति, न वा भाषाकविसमाहृतान् नवान् नवीन् मनोरमान् चमत्कारविशेषाधायकान् पथोऽनुसर्तुं संस्कृत–साहित्य-वैभवेषु च निधीन् वर्द्धयितुं संस्कृतज्ञा एव प्रायशः पारयन्ति। कदाचिद् वृन्दारक-वृन्द-वाण्यां गद्यकाव्यप्रचार-दौर्बल्यस्येदमेव प्रधानं कारणं स्यात्। महदिदमुपहासास्पदं विडम्बनं यद्—मण्डूक इव महापारावार–पारमासादयितुं यतमानस्तादृशं कवि–कौशल-निकषायितं गद्यकाव्यं मादृक्षः क्षोदीयान् जनो रिरचयिषुः संवृत्त इति। काव्यमिदं मा स्म भूत् तादृगभाव–विघट्टकम्। मा स्म वा पुषत् कस्यापि मोद-विशेषम्, परं मया तु सनातनधर्म–धूर्वह–शिवराज–वर्णनेन रसना पावितैव, प्रसङ्गतः सदुपदेश–निर्देशैः स्व-ब्राह्मण्यं सफलितमेव, ऐतिहासिककाव्यरुचीनि स्वमित्राणि रञ्जितान्येव, चिरमस्मत्पूर्वजैः पराशरपाराशरादिभिरुपासिता संस्कृतभाषा सेवितैव, चक्षुषी निमील्य सविशेषं साक्षात्कृता पीयूष–पूर–पूर्णैरिव दृक्पातैरुज्जीवयन्ती पारिजात–कुसुम–वर्षिभिरिव वचनैरुपदिशन्ती जननी सरस्वती समाराधितैव, सद्यः परन्निर्वृतिश्च समासादितैव। भवभूतिजगन्नाथादीनां

राजमान्यानां कवि-मण्डल-चक्रवर्तिनान्तु द्वेषविशेषैर्वा स्वग्रन्थ-मार्मिकजनालाभेन वा कारणान्तर-कलापैर्वा महानेव शोक-सङ्घात आसीत्। "कोऽस्मद्ग्रन्थानवलोकयिष्यति ? को वाऽस्माकं गूढ-तात्पर्यं भोत्स्यति ?"—इति चिन्तासन्तान-वितान-झञ्झावातोद्धूत-संशयघनघनाडम्बर एव तथा समरौत्सीद् हृदयाकाशम् ; यथा ध्रुवं सद्यः परनिर्वृति-रूप-चन्द्रिका-प्रसरेणापि न रञ्जितमेव तदन्तःकरण-कुमुद-वनम्।

तथा च तैरेवोक्तम्—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥"

"विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधर-माधुरीं विधुरयन् वाचां विलासो मम ॥"

अहन्तु तादृक्षाणां महाकवीनां चरण-रजो-विमर्श-भाजनमपि तदपेक्षयाऽधिकं भाग्यवत्तरोऽस्मीति निश्चिनोमि, यतो मद्ग्रन्थ-मार्मिकस्तु मिथिला-मही-महेन्द्रः, भारत-साम्राज्य-व्यवस्थापक-समाज-सञ्जीवनः, महामान्यः, वदान्यः, धन्य-धन्यः, विविध-बिरुदावली-विराजमानः, राजमानोन्नतः, नतोन्नतिदायकः, महा-राजश्रीरमेश्वरसिंहवीरवर एवास्ति। मान्यन्ति च परश्शता वाराण-स्यादि-पण्डित-मण्डल-मण्डना रसास्वादानुकूल-वासनावासिता-न्तःकरणा विबुध-जनाः।

सोऽयं स्वलेखनी-कण्डूमुपशमयितुं लिखितः प्रकाण्ड-लेखो यदि केषाञ्चित् पण्डित-प्रकाण्डानां कर्ण-कण्डूं खण्डयेत् ; तत् कृत-कृत्यः संवर्त्तेय। ये तु पुरोभागिनो निगीर्योपि प्रबन्धममुं तुण्ड-मुण्ड-गण्ड-कण्डूयनैः, ताण्डव-करण्डीकृत-भ्रूभङ्गैश्चास्मानास्मा-कांश्च हासयिष्यन्ति; तेऽप्यसङ्ख्य-प्रणति-पात्राण्येवास्माकम्। ये तु जोषं जोषमालोक्यापि काव्यानि, समासाद्यापि च तोषम्, सरो-षमुज्जृम्भिताभिर्जाठरज्वालाभिरेव तं जारयन्ति; जारयन्ति ते ग्राव्णोऽपि लौहमपि विषमपि दाधीचास्थीन्यपि चेति विलक्षण-कुक्षयस्ते न कस्य नमस्याः ?

—अम्बिकादत्तव्यासः।

❀ श्रीः ❀

# शिवराजविजयः

## गद्यकाव्यम्

"विष्णोर्माया भगवती यया सम्मोहितञ्जगत्"

"हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते"।

—भागवतम्।

---

वागीश्वर्यै नमः।

शिवाङ्के खेलन्ती शिवशिरसि गङ्गालहरिकां
समुद्यद्गम्भीरध्वनिभरसमुद्दीपितमदाम्।
निरीक्ष्योत्का वामा सरलहृदयाऽऽघूर्णितवती
यमासेव्यं देवं तमिह कलये चित्तनिलये॥

तत्रभवान् कविकुलचूडामणिः सिद्धसरस्वतीकोऽम्बिकादत्तव्यासो वीररस-प्रधानं गद्यकाव्यं चिकीर्षुर्महनीययशसो भारतभागधेयस्य दुर्दान्तोरगजिह्व-जिह्वोत्पाटनकुशलस्य शिववीरस्य चरितचयनेनैव भारती कृतार्थयितव्येति विहितमनोरथ उपक्षिपति वेदव्यासोक्तिं श्रीमद्भागवतादुद्धृताम्—विष्णोर्मायेति। वेवेष्टि व्याप्नोति चराचरात्मकं प्रपञ्चमिति विष्णुर्ब्रह्म, तस्य माया = सत्त्व प्रधानः शक्तिविशेषः। सा चैषा भगवती = समग्रषड्गुणसम्पन्ना।

---

## शिवराज-विजय का हिन्दी अनुवाद

"भगवान् विष्णु की माया (दैवीशक्ति) सकल-ऐश्वर्यशालिनी है, जिसने सम्पूर्ण जगत् को मोह में डाल रक्खा है, कर्तव्याकर्तव्यविमूढ़ कर रक्खा है।"

अरुण एष प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः। एष

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥

इति प्रसिद्धो भगपदार्थः—तद्वत्त्वञ्च भगवत्त्वम्। यया = मायया। गच्छतीति जगत् स्थावरस्याप्युपलक्षणम्। सम्मोहितम् = सम्यग्रूपेण मोहितम्।

हिंस्रः = घातुकः। खलः = दुष्टः। स्वस्यैव पापेन विहिंसितो भवति, नतु तत्र निमित्तान्तरापेक्षा। साध्नोति परकार्यमिति साधुः। तथाभूतश्च समत्वेन = विवेचकत्वेन। भयाद्विमुच्यते = अपगतभयो भवति। तत्रापि तस्य समत्वमेव हेतुर्न बीजान्तरापेक्षा–तदुक्तम् "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः" इति। एतेनाऽऽद्यनिश्वासे पापिनामशोभनाः साधूनाञ्च शोभना आचाराः प्रदर्शिता भवेयुरित्युपक्षिप्तम्। सर्वञ्चेदं सर्वतन्त्रस्वतन्त्रस्य भगवतो मायया त्रिगुणात्मिकया निबद्धैरेव समास्थीयत इति, काचन हिन्दुकन्या केनचन दुष्टेन हृता रक्षिता च सा साधुना, दुष्टनाशश्च स्वपापेनैव संवृत्त इति कथाभागश्च। विष्णुनामग्रहणेन मङ्गलमपि शिष्टाचारानुमित-श्रुतिबोधितेतिकर्त्तव्यताकं सूचितम्।

कथाभागं प्रारभमाणो भगवदादित्यप्रकाशात्मवस्तुनिर्देशरूपमपि मङ्गलं समाचरति–अरुण एष इति। पूर्वस्यामिति–"दिशि" इति विशेष्यम्। मरीचीनां मालाऽस्यास्तीति मरीचिमाली = दीधितिपतिः। बहुव्रीहीतरसमा-सोपलक्षककर्मधारयपदघटितमपि "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तद-र्थप्रतिपत्तिकर" इति वचनं न सार्वत्रिकम्, "असुब्वत" इति भाष्यप्रयोगा-दिति ध्येयम्। अरुणः = ईषल्लोहितः। "ज्योतिषां रविरंशुमान्" इति भगवद्विभूतिसमूहपातित्वेन भगवत्त्वं सर्वथा स्फुटम्। अथाऽऽदित्यं विशिनष्टि–

"हिंसा करनेवाला दुर्जन अपने ही पाप से विनाश को प्राप्त होता है और परोपकारी पुरुष कर्तव्याकर्तव्यविवेक से भयविमुक्त हो जाता है।"

पूर्व दिशा में भगवान् सूर्य की यह आरक्त आभा है। ये भगवान्

भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचर-चक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीक-पटलस्य, शोक-विमोकः कोक-लोकस्य, अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः सर्वव्यवहारस्य, इनश्च दिनस्य। अयमेव अहोरात्रं जनयति,

---

एष भगवानिति। "दिनस्य" इत्यन्ते मालारूपकालङ्कारो वैदर्भी रीतिः प्रसादाख्यश्च गुणः। मणिः=रत्नम्। यथा हीरकादिरन्धकारं वारयति प्रकाशयति च पदार्थसार्थं तथाऽयमपि बाह्याभ्यन्तरतमोऽपवार्य प्रकाशयति सकलानर्थानिति मणित्वेन रूपणम्। खे नभसि चरन्ति गच्छन्तीति खेचराः=भगणाः, तेषां चक्रस्य=समूहस्य। चक्रवर्त्ती=सम्राट्। सैन्यं प्रवर्त्तयति सम्राट्, दिनाधिपोऽपि सर्वं ग्रहगणमिति रूपणम्। आखण्डलदिशः=इन्द्रसम्बधिन्याः प्राच्या नायिकायमानायाः। कुण्डलम्=कर्णाभरणविशेषः। वर्त्तुलत्वमारोपबीजम्। ब्रह्माण्डमेव भाण्डम्=सदनम्, तस्य दीपकः। प्रकाशकत्वमत्राऽऽरोपहेतुः। पुण्डरीकाणाम्=कमलानाम्, "पुण्डरीकं सिताम्भोजम्" इति विशेषग्रहणन्तु नात्र, श्वेतत्वस्याविवक्षितत्वात्, पटलस्य=समूहस्य। प्रेयान्=अतिशयेन प्रियः। कोकानाम्=चक्रवाकाणाम्, लोकस्य=समुदायस्य। शोकस्य विमोकः=मोक्षः। रूपकम्। कोकमिथुनानां रात्रिविरहः कविसमयख्यातः। अत्र बहुव्रीहिप्रदर्शनं टीकाकृतामनपेक्षितमसाम्प्रदायिकञ्च, बहुव्रीहिसंग्राह्याभिधेयस्य समारोपणादेवोपपत्तेः। रोलम्बानाम्=भ्रमराणाम्, कदम्बस्य=समूहस्य। अवलम्बः=आश्रयः। सर्वश्चासौ व्यवहारः=ऐहिकामुष्मिकलक्षणो व्यापारः, तस्य, सूत्रधारः=प्रवर्त्तयिता। दिनस्य, इनः=स्वामी। "इनः सूर्ये प्रभावपि"

---

( सूर्य ) अन्तरिक्षमण्डल के रत्न हैं, नक्षत्रराशि के सम्राट् हैं, प्राची दिशारूपी नायिका के कुण्डल हैं, ब्रह्माण्डरूपी गृह के दीपक हैं, कमलकदम्ब के ( विकासक होने से ) प्रियतम हैं, चक्रवाकों के शोक-विमोचन हैं, भ्रमरों के आश्रय हैं, ऐहिक और पारलौकिक सकल व्यवहारों के प्रवर्तक हैं, और हैं दिन के स्वामी। ये ही दिन और रात के

अयमेव वत्सरं द्वादशसु भागेषु विभनक्ति, अयमेव कारणं षण्णामृतूनाम्, एष एवाङ्गीकरोति उत्तरं दक्षिणं चायनम्, एनेनैव सम्पादिता युगभेदाः, एनेनैव कृताः कल्पभेदाः, एनमेवाऽऽश्रित्य भवति परमेष्ठिनः परार्द्धसङ्ख्या, असावेव चर्कर्त्ति बर्भर्ति जर्हर्ति च जगत्, वेदा एतस्यैव वन्दिनः, गायत्री अमुमेव गायति,

त्यमरः। इनपदस्य स्वामिसूर्योभयवाचित्वेऽप्यत्राऽऽद्यपर्यायत्वमेवेति ध्येयम्।

अथ स्वभावोक्त्याऽलङ्करोति तमेव भगवन्तम्—अयमेवेति। अहश्च रात्रिश्चाहोरात्रस्तम्। शशधरेऽपि किरणानुप्रवेशद्वारा विकाशकत्वमेतदीयमेवेति भवति द्वितयजनकत्वमेवकारसार्थक्यश्चेति विवेचनापटवः। जनयति = प्रादुर्भावयति। वत्सरम् = हायनम्। द्वादशसु भागेषु = मेषादिमासरूपेषु। विभनक्ति = विभजते। "भञ्जो आमर्दने" इत्यस्य रूपम्। भवति चात्र मानवं शासनम् 'अहोरात्रे विभजते सूर्यो मानुषदैविके' इति। षण्णामृतूनाम् = वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराणाम्। कारणम् = हेतुः। अयनम् = सूर्यमार्गः। युगानाम् = कृतत्रेताद्वापरकलीनाम्। भेदाः = विभागाः। एनेनैव सूर्येणैव, अन्वादेशत्वादेनादेशः। कल्पभेदाः, षष्ठीतत्पुरुषः। कल्पश्चैकसहस्रमहायुगात्मकः ख्यातः कालविदाम्। परमेष्ठिनः = विधातुः। परार्द्धसङ्ख्या = अन्तिमा परार्द्धनाम्ना ख्याता संख्या। चर्कर्ति = पुनः पुनः करोति। यङ्लुगन्तम्। यङ्लुकश्छान्दसत्वं तु न वैयाकरणसम्प्रदायसिद्धं न वा महाकविजनानुमोदितमिति भूयो भूयः प्रयोगान् प्रदर्शयति। यङ्लुगन्तत्रितयेनोत्पत्ति-स्थिति-लयकर्तृत्वं निवेदितम्। बन्दिनः = स्तुतिपाठकाः। वेदाः

जनक हैं, ये ही वर्ष को बारह भागों में बाँटते हैं, ये ही छः ऋतुओं के जन्मदाता हैं, ये ही दक्षिणायन और उत्तरायण ( दक्षिण और उत्तर मार्ग ) का अवलम्बन करते हैं, इन्हीं ने सत्य, त्रेता, द्वापर और कलियुग का भेद किया है, इन्हीं ने कल्प का विभाग किया है, इन्हीं के सहारे ब्रह्मा की परार्द्ध नाम की सबसे बड़ी ( अन्तिम ) संख्या ( ब्रह्मा की आयु का आधा काल ) पूरी होती है, ये ही बार बार जगत् की सृष्टि, पालन और संहार करते हैं, वेद इन्हीं की स्तुति करते हैं,

ब्रह्मनिष्ठा ब्राह्मणा अमुमेवाहरहरुपतिष्ठन्ते । धन्य एष कुलमूलं श्रीरामचन्द्रस्य, प्रणम्य एष विश्वेषामिति उदेष्यन्तं भास्वन्तं प्रणमन् निजपर्णकुटीरात् निश्चक्राम कश्चित् गुरुसेवन-पटुर्विप्रबटुः ।

"अहो ! चिररात्राय सुप्तोऽहम् . स्वप्नजालपरतन्त्रेणैव महान्

---

= ऋग्-यजुःसामाथर्वाभिधाः । एतेन सूर्ये ब्रह्मदृष्टिरिति सूचितम् । "अन्तस्तद्धर्मोपदेशात्" इत्यधिकरणे हि निर्णीतमादित्योपाधिब्रह्मस्तूयमानत्वम् । अत एव "गायत्र्यमुमेव गायतो" त्येवकारसहितं वाक्यं स्वरसतः सङ्गच्छते । गायत्र्याश्च मुख्यं वाच्यं ब्रह्मैवेति बृहदारण्यकादिषु सुनिरूपितम् । "गायन्तं त्रायत" इति तद्व्युत्पत्तिरप्यत एवोपपद्यते । ब्रह्मणि निष्ठा येषां ते, वेदपारगा इत्यर्थः । उपतिष्ठन्ते = उपासते । "उपाद्देवपूजा-सङ्गतिकरण-मित्रकरण पथिष्वि" त्यात्मनेपदम् । भास्वन्तम् = सूर्यम् । "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय" इत्यमरः । भास्वत्त्वं प्रणतिहेतुः । प्रणामो हि स्वापकृष्टत्वबोधनम्, तच्च प्रणम्य गुणेषु सत्स्वेवेति न तिरोहितम् । ह्रस्वा कुटी-कुटीरः । " कुटीशमीशुण्डाभ्यो रः " । गुरुसेवने पटुः = कुशलः । विप्रश्चासौ बटुर्विप्रबटुः = ब्राह्मणब्रह्मचारी ।

अहो = साश्चर्यखेदे नैत्यिककर्मानुष्ठानकाललोपोत्थे ।

नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥

इत्यादिभिः सन्ध्यावन्दनादिनित्यकर्माननुष्ठाने प्रत्यवाय-स्मरणेन शयनादिना तत्कालातिवाहने स्वाभाविको हि क्षोभः सताम् । चिररात्राय = चिरम् । "चिराय चिररात्राय चिरस्याद्याश्चिरार्थका" इत्यमरः । स्वप्नः=निद्रा, स एव-

---

गायत्री इन्हीं का गुणगान करती है, वेदपारंगत ब्राह्मण प्रतिदिन इन्हीं की उपासना करते हैं, ये ही धन्यात्मा श्रीरामचन्द्रजी के कुल के मूल पुरुष हैं, ये सबके अभिवन्दनीय हैं—यह सोच कर उदयाचल पर आरूढ़ होनेवाले भगवान् सूर्य को प्रणाम करता हुआ गुरुसेवा में दक्ष एक बालक अपनी पर्णकुटी से बाहर निकला ।

"ओह ! मैं बहुत देर सोया रहा, निद्रारूपी जाल में फँसकर मैंने

पुण्यमयः समयोऽतिवाहितः, सन्ध्योपासनसमयोऽयमस्मद्गुरुचरणानाम्, तत्सपदि अवचिनोमि कुसुमानि" इति चिन्तयन् कदलीदलमेकमाकुञ्च्य, तृणशकलैः सन्धाय, पुटकं विधाय, पुष्पावचयं कर्त्तुमारेभे ।

बटुरसौ आकृत्या सुन्दरः, वर्णेन गौरः, जटाभिर्ब्रह्मचारी, वयसा षोडशवर्षदेशीयः, कम्बुकण्ठः, आयतललाटः, सुबाहुर्विशाललोचनश्चाऽऽसीत् ।

---

जालम् = आनायः, तत्परतन्त्रेण = तदायत्तेन । पुण्यमयः, "ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेदि"ति मनूक्त्या । सपदि = सत्वरम् । अवचिनोमि = संकलयामि । कदली = रम्भा, तस्या दलम् = पत्रम् । आकुञ्च्य = भुग्नं विधाय । तृणानां शकलैः = खण्डैः । सन्धाय = संमेल्य । पुटमेव पुटकम् = समुद्रः । "दोना"इति हिन्दी । पुष्पाणाम्, अवचयः = संग्रहः, तम् ।

आकृत्या = आकारेण । "प्रकृत्यादिभ्य उपसंख्यानमि"ति तृतीया । वर्णेनेत्यत्रापि । जटाभिः = सटाभिः । "इत्थंभूतलक्षण"इति तृतीया । जटाज्ञाप्यब्रह्मचारित्वसंवलित इत्यर्थः । षोडशवर्षदेशीयः = ईषदसमाप्तषोडशवर्षः । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" । कम्बुरिव कण्ठो यस्य सः । शङ्खग्रीव इत्यर्थः ।

---

बड़ा पुण्यमय समय गवाँ डाला । यह हमारे गुरूजी के सन्ध्यावन्दन का समय है, इसलिए तुरन्त फूल तोड़ लाऊँ"—यह ठान कर उसने एक केले के पत्ते को मोड़ कर तिनकों से जोड़ा और दोना बना कर फूल तोड़ने लगा ।

उस बालक की आकृति रमणीय थी, रंग गोरा था, जटाओं से ब्रह्मचारी प्रतीत होता था, अवस्था लगभग १६ वर्ष की थी, उसकी गरदन शङ्ख की तरह थी, ललाट विस्तीर्ण था, भुजाएँ प्रशस्त एवं नेत्र विशाल थे ।

कदलीदलकुञ्जायितस्य एतत्कुटीरस्य समन्तात् पुष्पवाटिका, पूर्वतः परम-पवित्र-पानीयं परस्सहस्र-पुण्डरीक-पटल-परिलसितं पतत्रि-कुल-कूजित-पूजितं पयःपूरपूरितं सर आसीत् । दक्षिणतश्चैको निर्झर-झर्झर-ध्वनि-ध्वनित-दिगन्तरः फल-पटलाऽऽस्वाद-चपलित-चञ्चु-

---

कुञ्ज इव = लतादिपिहितोदर इव, आचारीदित्यकुञ्जायिष्ट । "कर्तुः क्यङ्सलोपश्चे"ति क्यङन्तात् क्ते कुञ्जायितम् । कदलीदलैः कुञ्जायितस्येति समासः । लुप्तोपमालङ्कारः । समन्तात् = परितः । पूर्वतः = पूर्वस्याम् । "तसिलादिष्वाकृत्वसुच" इति पुंवत्वम् । परस्सहस्राणाम् = सहस्राधिकानाम्, पुण्डरीकाणाम् = सिताम्भोजानाम्, पटलेन = समूहेन, परितः = सर्वतः, लसितम् = शोभितम् । पतत्रिणाम् = पक्षिणाम्, कुलस्य = गणस्य, कूजितेन = शब्देन, पूजितम् = विराजितम् । पयसां पूरेण = प्रवाहेण, पूरितम् = भरितम् । विशेषणानीमानि चत्वारि सरसो विशेष्य-भूतस्य । दक्षिणतः = दक्षिणस्यां दिशि । पर्वतखण्ड आसीदित्यन्वयः । पर्वतखण्डः = प्रत्यन्तपर्वतः । "टेकरी" इति हिन्दी । विशिनष्टि विशेषणत्रयेण—निर्झरस्य = प्रवाहस्य, "वारिप्रवाहो निर्झरो झर" इत्यमरः, झर्झरध्वनिना ध्वनितम् = नादितम्, दिगन्तरम् = दिक्प्रान्तभागो यस्य सः । झर्झर इति जलशब्दानुकृतिः । फलानां पटलस्य = समूहस्य, आस्वादेन = भक्षणेन, चपलिताः = चञ्चलाः, चञ्चवः = त्रोटयः, "चञ्चुस्त्रोट्यां स्त्रियामि"

---

उसकी पर्णकुटी के, जो केले के पत्तों से निकुञ्ज-सी लगती थी, चारों ओर पुष्पवाटिका थी, पूर्व की ओर जलराशि से लबालब भरा हुआ तालाब था, उसका जल अत्यन्त निर्मल था, हजारों सफेद कमल उसकी शोभाभिवृद्धि करते थे, पक्षियों के कलरव से वह बहुत ही सुहावना लगता था । दक्षिण तरफ एक छोटा-सा पहाड़ था, झरने की झर-झर ध्वनि से उसकी सब दिशाएँ गूँजा करती थीं, फल खाने से चञ्चल चोंचवाले विविध पक्षियों के फुदुक-फुदुक कर बैठने से खूब झुकी हुई

पतङ्ग–कुलाऽऽक्रमणाधिक–विनत-शाख-शाखि-समूह-व्याप्तः सुन्दर-कन्दरः पर्वतखण्ड आसीत्।

यावदेष ब्रह्मचारी वटुरलिपुञ्जमुद्धूय कुसुम–कोरकानवचिनोति; तावत् तस्यैव सतीर्थ्योऽपरस्तत्समानवयाः कस्तूरिका–रेणु–रूषित

---

त्यमरः, येषां, ते च ते पतङ्गाः = पक्षिणः, "पतङ्गौ पक्षिसूर्यौ च" इत्यमरः, तेषां कुलम् = समूहः। तस्याक्रमणेन, अधिकम् = अत्यन्तम्, विनताः = नम्रीभूताः, शाखाः = शिखाः, "शिखा शाखा शिफा लते" त्यमरः, येषां ते च ते शाखिनः = वृक्षाः, "वृक्षो महीरुहः शाखी विटपी पादपस्तरुरि" त्यमरः, तेषां समूहेन व्याप्तः = आवृतः। सुन्दराः = शोभनाः, कन्दराः = गुहाः, यस्य सः। "दरी तु कन्दरो वा स्त्री" त्यमरः। अत्रानुप्रासः शब्दालङ्कारो गौडी च रीतिः।

वृह्म = वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी। "ब्रह्मचर्यमहिंसा चे"त्यादौ तु यमभेदविशेषस्य मैथुनत्यागस्यैव ब्रह्मचर्यपदवाच्यता। अलीनाम् = भ्रमराणाम्, पुञ्जः = राशिः, "स्यान्निकायः पुञ्जराशी"इत्यमरः, तम्, अवधूय = निवार्य। कुसुमानां कोरकाः = कलिकाः, "कलिका कोरकः पुमानि"त्यमरः, तान्। अवचिनोति = संकलयति। सतीर्थ्यः = सहाध्यायी। "समानतीर्थे वासी"ति यप्रत्यये "तीर्थे य" इति सादेशः। "सतीर्थ्यास्त्वेकगुरव" इत्यमरः। तेन समानं वयः = अवस्था, यस्य सः। सतीर्थ्यं विशिनष्टि चतुर्भिर्विशेषणैः। श्याम इत्याद्यं विशेषणम्। स्वभावतः कृष्णवर्णं तमुत्प्रेक्षते-कस्तूरिकायाः = मृगनाभेः, रेणुभिः = रजोभिः, रूषित

---

डालियोंवाले वृक्षों की श्रेणियों से वह भरा था और उस पर बहुत-सी सुन्दर गुफाएँ थीं।

ज्योंही वह ब्रह्मचारी भौंरों को उड़ाकर पुष्प-कलियों को तोड़ने लगा त्योंही उसीका सहाध्यायी और समवयस्क दूसरा ब्रह्मचारी, जो कस्तूरी की बुकनी से सना हुआ-सा साँवले रंग का था, ललाट पर चन्दन

इव श्यामः, चन्दन–चर्चित–भालः, कर्पूरागुरु-क्षोद-च्छुरित–वक्षो-बाहु-दण्डः, सुगन्ध–पटलैरुन्निद्रयन्निव निद्रा-मन्थराणि कोरक–निकुरम्बकान्तराल–सुप्तानि मिलिन्द–वृन्दानि, झटिति समुपसृत्य निवारयन् गौरबटुमेवमवादीत्—

"अलं भो ! अलम्, मयैव पूर्वमवचितानि कुसुमानि, त्वं तु चिरं रात्रावजागरीरिति क्षिप्रं नोत्थापितः, गुरुचरणा अत्र तडागतटे

इव = छुरित इव । चन्दनेन = गन्धसारेण, चर्चितम् = लिप्तम्, भालम् = ललाटम्, यस्य सः । कर्पूरस्य = घनसारस्य, अगुरोः = नृपार्हकस्य, "अगर" इति हिन्दी, च क्षोदेन = चूर्णेन, छुरितम् = व्याप्तम्, वक्षोबाहु-दण्डम् = उरःस्थलभुजद्वयम्, यस्य सः । सुगन्धपटलैः = सौरभसमूहैः, निद्रया मन्थराणि = अलसानि । कोरकाणाम् = कलिकानाम्, निकुरम्बकाणि = वृन्दानि, "निकुरम्बं कदम्बकम्" इत्यमरः । तेषाम्, अन्तराले = अभ्यन्तरे, सुप्तानि = शयानानि । मिलिन्दानाम् = भ्रमराणाम्, वृन्दानि = समूहान् । उन्निद्रयन्निव = जागरयन्निव । अन्व-यमनुसृत्यात्र व्याख्यातम् । सुगन्धलोलुपा द्विरेफाः श्यामबटुशरीरानुलिप्त-चन्दन-घनसार-कस्तूरिका-परिमलमाघ्राय पुष्पेभ्य उड्डीय तच्छरीरनिपतनो-त्सुकाः सञ्जाता इति स्वाभाविकवार्त्तया जागरणमुखेनात्रोत्प्रेक्षणम् ।

अलं भो अलम्, पुष्पावचयं निषेधति । इतः परं कांश्चित्स्थलवि-शेषानपहाय वृत्तकं नाम गद्यम् । "अकठोराक्षरं स्वल्पसमासं वृत्तकं मतम्"

लगाये, छाती और भुजाओं पर कपूर और अगर की बुकनी रमाये था, सुगन्धि की गमक से कलियों के अन्दर सोये हुए निद्रा से अलग भ्रमरों के झुण्डों को जगाता हुआ-सा झटपट समीप में आकर मना करता हुआ गोरे ब्रह्मचारी से यों बोला—

"बस भाई बस, फूल मत तोड़ो, मैंने पहले ही फूल तोड़ लिये हैं, तुम रात्रि में बड़ी देर तक जागते रहे, इसलिए तुम्हें जल्दी नहीं जगाया, गुरुजी यहाँ तालाब के किनारे सन्ध्यावन्दन कर रहे हैं, मैंने उनके

सन्ध्यामुपासते, संस्थापिता मया निखिला सामग्री तेषां समीपे। यां च सप्तवर्षकल्पाम्, यावनत्रासेन निःशब्दं रुदतीम्, परम-सुन्दरीम्, कलित–मानव–देहामिव सरस्वतीं सान्त्वयन्, मरन्द-मधुरा अपः पाययन्, कन्दखण्डानि भोजयन्, त्वं त्रियामाया

इति तल्लक्षणात्, एतदेव "अनाविद्धपदं चूर्णम्" इति वामनसूत्रे चूर्णक-नाम्नाऽभिहितम्! अजागरीः, "जागृ" धातोर्लुङि सिपि रूपम्। सप्तवर्ष-कल्पाम् = असमाप्तसप्तवर्षाम्। यवनेभ्य आगतो यवनानां वाऽयं यावनः, स चासौ त्रासस्तेन। यवनजवनशब्दौ संस्कृतसाहित्ये समायातौ। आद्यौ वशिष्ठविश्वामित्रसंग्रामे धेनुस्तनसमुत्पन्नेषु रूढः, परश्च सगरसंग्रामे वशिष्ठ-परित्याजितार्यधर्मेषु सागरपारस्थक्षत्रियेष्विति त्यक्तमहामहोपाध्यायपदवीकाः शक्तिसम्प्रदायाचार्याः श्रीपञ्चाननतर्करत्नभट्टाचार्याः। तन्मतानुसरणे भारतसमागतेष्वेषु जवनशब्दप्रयोग एवोचित इति भाति। कलितः = धारितः, मानवो देहः, यया सा, ताम्, मानवरूपेणावतीर्णां सरस्वती-मिवेत्युत्प्रेक्षा। मरन्देन = पुष्परसेन, मधुराः = मिष्टाः। अपां विशेषणम्। "अयि दलदरविन्द! स्यन्दमानं मरन्दम्, तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गा" इति पण्डितराजपद्ये प्रयुक्तोऽयं मरन्दशब्दः। मरम् = भ्रमरमरणम्, द्यति = खण्डयतीति मरन्दः, भ्रमरजीवनम्, मकरन्द, इति व्युत्पत्तिलभ्यत्वमर्थस्य। पाययन्, णिजन्ताच्छतरि। कन्दाः = ऋषीणां खाद्यविशेषाः। "शालूकं कन्दमौत्पलम्" "कन्दमस्त्री मूलसस्यम्" इति च वैजयन्ती। त्रियामायाः = रात्रेः। "रात्रिस्त्रियामा क्षणदा क्षपे"त्यमरेण रूढत्वम्। अत एव यामत्रयमिति प्रहरत्रयार्थकं

समीप सब सामग्री प्रस्तुत कर दी है, यवन के त्रास से सिसकियाँ भर रही, परम सुन्दरी, मानुषदेह में अवतीर्ण हुई सरस्वती-सी लगभग सात वर्ष की जिस बालिका को ढाढस देते, फूलों के रस (मधु) से मीठा जल पिलाते और कन्दों के टुकड़े खिलाते तुमने रात के तीन पहर

यामत्रयमनैषीः; सेयमधुना स्वपिति, उद्बुध्य च पुनस्तथैव रोदिष्यति, तत्परिमार्गणीयान्येतस्याः पितरौ गृहं च—"

इति संश्रुत्य उष्णं निःश्वस्य यावत् सोऽपि किञ्चिद्वक्तुमियेष तावदकस्मात् पर्वतशिखरे निपपात उभयोर्दृष्टिः।

तस्मिन् पर्वते आसीदेको महान्कन्दरः। तस्मिन्नेव महामुनिरेकः समाधौ तिष्ठति स्म। कदा स समाधिमङ्गीकृतवानिति कोऽपि न वेत्ति। ग्रामणी-ग्रामीण-ग्रामाः समागत्य मध्ये मध्ये तं पूजयन्ति प्रणमन्ति स्तुवन्ति च। तं केचित् कपिल इति, अपरे लोमश इति, इतरे जैगीषव्य इति, अन्ये च मार्कण्डेय इति, विश्वसन्ति स्म।

---

सङ्गच्छते। परिमार्गणीयानि = अन्वेषणीयानि। नपुंसकमनपुंसकेनेत्येकशेषः।

वक्तुमियेष = कथयितुमिच्छति स्म।

समाधौ = चित्तवृत्तिनिरोधात्मके योगे। ग्रामण्यः = ग्रामाधिपाः, 'लम्बरदार, जमीन्दार', इति हिन्दी, ते च ते, ग्रामे भवा ग्रामीणाः = ग्रामवासिनः; तेषां ग्रामाः = समूहाः। श्रुत्यनुप्रास-प्रदर्शनमात्र-फलकोऽयम्। सरसे रौद्रादिरसाभाववति प्रकृते दोषत्वमेतस्येति केचित्। तम् = समाधिनिरतम्। कपिललोमश जैगीषव्य-मार्कण्डेयाश्चिरञ्जीविनो महर्षयः। "नारद इत्यबोधि स" इत्यादि-

---

बिताये, वह इस समय सोती है, जागकर फिर उसी तरह रोएगी, इसलिए उसके माता-पिता और घर का पता लगाना चाहिये।"

यह सुन गरम सांस लेकर ज्योंही उसने भी कुछ कहना चाहा त्योंही अचानक उन दोनों की दृष्टि पर्वत-शिखर पर पड़ी।

उस पर्वत में एक बड़ी गुफा थी, उसमें एक पहुँचे महात्मा समाधि लगाकर बैठे थे। कब उन्होंने समाधि लगाई थी, यह किसी को विदित न था। ग्रामवासी जमींदार, किसान आकर यदा कदा उनकी पूजा करते थे, प्रणाम करते थे और स्तुति करते थे। कोई उन्हें कपिल समझते थे, तो कोई लोमश समझते थे, कोई जैगीषव्य समझते, थे, तो दूसरे

स एवायमधुना शिखरादवतरन् ब्रह्मचारि-बटुभ्यामदर्शि ।

"अहो! प्रबुद्धो मुनिः! प्रबुद्धो मुनिः! इत एवाऽऽगच्छति, इत एवाऽऽगच्छति, सत्कार्योऽयं सत्कार्योऽयम्" ति तौ सम्भ्रान्तौ बभूवतुः।

अथ समापित-सन्ध्यावन्दनादिक्रिये समायाते गुरौ, तदाज्ञया नित्यनियम-सम्पादनाय प्रयाते गौरवटौ, छात्रगण-सहकारेण प्रस्तुतासु च स्वागत-सामग्रीषु, "इत आगम्यतां सनाथ्यतामेष आश्रम"

---

वर्दितिना निपातेनाभिहितत्वान्न तेषां द्वितीयान्तता विश्वसन्तिक्रियाकर्मत्वेऽपीति बोध्यम्। गृहीतृभेदादेकस्यैवानेकधोल्लेखादुल्लेखालङ्कारः। अदर्शि = दृष्टः। कर्मणि लुङि रूपम्।

सत्कार्यः = आदरणीयः। सम्भ्रान्तौ = क्षुभितौ। बहोः कालात् कन्दरायां निवसन् मुनिरकस्माद्बहिरायात इति हर्षोद्रेकेण व्याकुलौ बभूवतुः। अत एव च तदुक्तिषु साम्रेडता।

समापिता सन्ध्यावन्दनादिक्रिया येन सः, तथाभूते। आदिना स्वेष्टदेवतापूजन-स्वेष्टगुरुमन्त्रजपादिः। नित्या ये नियमाः = सन्ध्यावन्दनादयः, तेषां सम्पादनाय। छात्रगणस्य, सहकारेण = साहाय्येन। स्वागत-सामग्रीषु = उपचारद्रव्येषु। "यस्य च भावेन भावलक्षणमि"ति भावाधिकरणे सप्तमी। प्रस्तुतासु = सन्नद्धासु। सनाथ्यताम् = समलंक्रियताम्।

---

मार्कण्डेय समझते थे। इस समय ब्रह्मचारियों ने उन्हीं को पर्वत के शिखर से उतरते देखा।

"अहा! मुनिजी समाधि से जाग गये! मुनिजी समाधि से जाग गये! इसी ओर आ रहे हैं! इसी ओर आ रहे हैं! इनका सत्कार करना चाहिये, इनका सत्कार करना चाहिये," यों वे उतावले हुए।

तदुपरान्त सन्ध्यावन्दन आदि कृत्य समाप्त कर गुरूजी के आने पर और उनकी आज्ञा से गोरे ब्रह्मचारी के स्नान, संध्यावन्दन आदि नित्य नियम करने के लिए चले जाने पर तथा छात्रों के सहयोग से स्वागत-सामग्रियों के प्रस्तुत होने पर "इधर पधारिये, इस आश्रम को अलंकृत

इति सप्रणाममभिगम्य वदत्सु निखिलेषु, योगिराज आगत्य तन्निर्दिष्ट–काष्ठ–पीठं भास्वानिवोदयगिरिमारुरोह, उपाविशच्च।

तस्मिन् पूज्यमाने, "योगिराडुत्थित इति, आयात इति च" आकर्ण्य कर्णपरम्परया, बहवो जनाः परितः स्थिताः। सुघटितं शरीरम्, सान्द्रां जटाम्, विशालान्यङ्गानि, अङ्गारप्रतिमे नयने, मधुरां गम्भीराञ्च वाचं वर्णयन्तश्चकिता इव सञ्जाताः।

अथ योगिराजं सम्पूज्य यावदीहितं किमपि आलपितुम्; तावत् कुटीराद् अश्रूयत तस्या एव बालिकायाः सकरुण–रोदनम्।

---

निखिलेषु= समुपस्थितेषु सर्वेषु। जनेष्विति शेषः। काष्ठपीठम् = दारुनिर्मितां चतुष्पादिकाम्। "चौकी" इति हिन्दी। उदयगिरिमिव = उदयाचलमिव। आरुरोह = अधिशिश्रिये। उपाविशत् = आसितवान्। न सूर्य इवाधिश्रित्य दूरं गतोऽपि तु तत्रैव स्थित इति क्रियाद्वयमुपात्तम्। उपमालङ्कारः।

सुघटितम् = यथावस्थित–शोभनाङ्ग-संस्थानम्। सान्द्राम् = घनाम्। अङ्गारप्रतिमे = अङ्गारसदृशे, प्रतिमाशब्दोऽत्रोपमावाचकः, दृष्टश्च तादृशेऽर्थे "न तस्य प्रतिमा अस्ति" इति वेदे, "गतः सुखान्यप्रतिमानि

---

कीजिये" यों पास जाकर प्रणामपूर्वक निवेदन करने पर योगिराज आकर जैसे सूर्य उदयाचल पर आरूढ़ होते हैं वैसे ही उनके द्वारा निर्दिष्ट चौकी पर आरूढ़ हुए और बैठ गये।

इधर उनकी पूजा शुरू होने पर 'योगिराज की समाधि भंग हो गई है और वे आये हैं' यह खबर एक दूसरे से सुनकर चारों ओर लोगों की बड़ी भीड़ लग गई। उनके सुसंगठित शरीर का, घनी जटाओं का, सुविस्तृत अङ्गों का, लालिमा से अंगारों के समान चमकीले नेत्रों का और मधुर तथा धीर वाणी का बखान कर रहे लोग मन्त्रमुग्ध-से हो गये।

तदनन्तर योगिराज का पूजन-सत्कार कर ज्योंही ब्रह्मचारी गुरुने उनसे कुछ पूछना चाहा त्योंही पर्णकुटी के भीतर से उसी बालिका का करुणक्रन्दन सुनाई दिया।

ततः "किमिति ? कुत इति ? केयमिति ? कथमिति ?" पृच्छा-परवशे योगिराजे ब्रह्मचारिगुरुणा बालिकां सान्त्वयितुं श्यामबटु-मादिश्य कथितम्—

भगवन् ! श्रूयतां यदि कुतूहलम्। ह्यः सम्पादित-सायन्तन-कृत्ये, अत्रैव कुशाऽऽस्तरणमधिष्ठिते मयि, परितः समासीनेषु छात्र-वर्गेषु, धीर-समीर-स्पर्शेन मन्दमन्दमान्दोल्यमानासु व्रततिषु, समुदिते यामिनी-कामिनी-चन्दनबिन्दौ इव इन्दौ, कौमुदी-कपटेन

हित्वे"ति वाल्मीकीये च। पृच्छा = प्रश्नः, तत्परवशे = तत्परतन्त्रे।

कुतूहलम् = कौतुकम्। वृत्तान्त-ज्ञानोत्कण्ठेति यावत्। ह्यः = गतदिवसे। सम्पादितम् = विहितम्, सायन्तनम् = सायंभवम्, कृत्यम् = सन्ध्यादि येन तादृशे। कुशास्तरणम् = कुशासनम्। "कुश की चटाई" इति हिन्दी। 'अधिशीङ्' इति कर्मसंज्ञा। धीरः = मन्दगतिः, समीरः = वायुः, तस्य स्पर्शेन। आन्दोल्यमानासु = सञ्चाल्यमानासु। व्रततिषु = लतासु। 'वल्ली तु व्रततिर्लता' इत्यमरः।

इन्दौ = चन्द्रमसि। समुदिते = उदयं प्राप्ते। चन्द्रमसं रूपयति— यामिनी = निशीथिनी, सैव कामिनी = ललना, तस्याः, चन्दनबिन्दौ = ललाट-तिलके इव। कौमुदी = चन्द्रिका, "चन्द्रिका कौमुदी ज्योत्स्ने" त्यमरः,

'वह क्यों रोती है ? कहाँ से आई ? कौन है ? कैसे आई ?' योगिराज के यों प्रश्न करने पर ब्रह्मचारी गुरुने साँवले ब्रह्मचारी को बालिका को ढाढ़स बँधवाने के लिए आज्ञा दे कर योगिराज से कहा—

भगवन्, यदि इसका वृत्तान्त जानने की उत्कण्ठा हो, तो सुनिये। कल सायंकाल के नित्यकृत्य से निवृत्त होकर जब मैं यहीं पर कुशासन डालकर बैठा था, चारों ओर छात्र-गण बैठे थे, मन्द-मन्द वायु के झोंकों से लताएँ धीरे धीरे हिलोरें ले रही थीं, रात्रिरूपी नायिका का चन्दन-बिन्दु-सा चन्द्रमण्डल उदित हो चुका था, आकाश चाँदनी के बहाने

सुधाधारामिव वर्षति गगने, अस्मन्नीतिवार्तां शुश्रूषुषु इव मौनमाकलयत्सु पतग–कुलेषु, कैरव–विकाश–हर्ष–प्रकाश–मुखरेषु चञ्चरीकेषु, अस्पष्टाक्षरम्, कम्पमान–निःश्वासम्, श्लथत्कण्ठम्, घर्घरितस्वनम्, चीत्कारमात्रम्, दीनतामयम्, अत्यवधानश्रव्यत्वादनुमितदविष्ठतं क्रन्दनमश्रौषम्। तत्क्षणमेव च "कुत इदम? किमिदमिति दृश्यतां ज्ञायताम्" इत्यादिश्य छात्रेषु विसृष्टेषु, क्षणानन्तरं छात्रेणैकेन भय-

---

तस्याः कपटेन = व्याजेन। वर्षतीवेत्युत्प्रेक्षा। पतगकुलेषु = पक्षिसमूहेषु। मौनम् = निःशब्दताम्, आकलयत्सु = आश्रयत्सु। किमिति मौनावलम्बनमित्युत्प्रेक्षते–अस्मन्नीतीति। शुश्रूषुषु = श्रोतुमिच्छुषु। कैरवाणाम् = सिताम्भोजानाम्, यो विकाशः = प्रफुल्लनम्, तेन यो हर्षप्रकाशः = मोदाविर्भावः, तेन मुखरेषु = शब्दायमानेषु। चञ्चरीकेषु = द्विरेफेषु। "इन्दिन्दिरो मधुकरश्चञ्चरीको मधुव्रत" इति वैजयन्ती। क्रन्दनम् = रोदनम्। अश्रौषम् = आकर्णिषम्। सप्तभिर्विशेषणैः स्वभावोक्त्या क्रन्दनं विशिनष्टि—अस्पष्टानि अक्षराणि, यस्मिंस्तत्। कम्पमाना निःश्वासाः, यस्मिंस्तत्। श्लथन् = शिथिलः, कण्ठः, यस्मिंस्तत्। अत्यवधानेन = विशेषध्यानेन, श्रव्यम् = श्रवणार्हम्, तस्य भावस्तत्त्वं तस्मात्, हेतौ पञ्चमी। अतिशयेन दूरं दविष्ठम्, तस्य भावो दविष्ठता, अनुमिता = विज्ञाता, दविष्ठता = अतिदूरता यस्य तत्। आदिश्य =

---

मानो अमृत-धारा बरसा रहा था, मानो हम लोगों की धार्मिक चर्चा सुनने की इच्छा से पक्षिगण मौन धारण किये थे और कुमुदों (सफेद कमलों) के विकास से उत्पन्न आनन्दातिरेक से भौंरे गुन-गुना रहे थे, मुझे सिसकियों से भरा हुआ अस्पष्ट करुणक्रन्दन सुनाई पड़ा। गला रुँध जाने के कारण वह घर्घरशब्दमय तथा चीत्कारमय था एवं गौर करने पर सुनाई देने के कारण सहज में उसकी दूरता का अनुमान होता था। मैंने तुरन्त ही "यह कहाँ से आ रहा है? क्या बात है? जरा देखो, पता लगाओ," यों आज्ञा दे कर छात्रों को भेजा। क्षण भर के बाद एक

भीता सवेगमत्युष्णं दीर्घं निश्वसती, मृगीव व्याघ्राऽऽघ्राता, अश्रुप्रवाहैः स्नाता, सवेपथुः, कन्यकैका अङ्के निधाय समानीता। चिरान्वेषणेनापि च तस्याः सहचरी सहचरो वा न प्राप्तः। ताञ्च चन्द्रकलयेव निर्मिताम्, नवनीतेनेव रचिताम्, मृणाल-गौरीम्, कुन्दकोरकाग्रदतीम्, सक्षोभं रुदतीमवलोक्याऽस्माभिरपि न पारितं निरोद्धुं नयन-बाष्पाणि।

अथ "कन्यके! मा भैषीः, पुत्रि! त्वां मातुः समीपे प्रापयि-

आज्ञाप्य। व्याघ्रेण=शार्दूलेन, आघ्राता=आक्रान्ता। उपमालङ्कारः। सवेपथुः=सकम्पा। एकेनाङ्के निधाय कन्यका समानीतेति स्थले क्रियापदद्वयम्। प्रधानक्रियानिरूपितकर्मत्वाभिधानेऽप्रधानक्रियानिरूपितकर्मत्वमनभिहितमप्यभिहितवत्प्रकाशत इति महाभाष्ये ध्वनितम्,

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते॥

इत्यादिना वाक्यपदीये स्पष्टीकृतञ्च। नवनीतेनेव=हैयङ्गवीनेनेव। "मक्खन" इति हिन्दी। मृणालमिव=कमलदण्ड इव, गौरीम्=श्वेताम्। लुप्तोपमा। कुन्दकोरकाः=माध्यकलिकाः, तेषामग्राणीव दन्ता यस्याः सा ताम्। "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चे" ति दत्रादेशे, उगिदन्तत्वाङ् ङीप्। सक्षोभम्=ससाध्वसम्।

मा भैषीः, "माङि लुङ्" "न माङ्योग" इत्यण्णिषेधः। मा वह, निषे-

छात्र भयभीत, जल्दी जल्दी गरम और लम्बी सांस ले रही, बाघ से आक्रान्त हरिणी-सी, आँसुओं की धाराओं से सराबोर, काँप रही एक कन्या को गोद में बैठा कर ले आया। बहुत खोज करने पर भी उसकी सखी या साथी का पता नहीं लगा। चन्द्रमा की कला से बनी हुई-सी, नवनीत से रची हुई-सी, कमलकन्द के समान गोरी, कुन्दपुष्प के समान सुन्दर दन्तपंक्तिवाली उस बालिका को रोती देख कर हम लोग भी अपने आंसू न रोक सके। तत्पश्चात् "बेटी, मत डरो, बच्ची, तुम्हें माँ

ष्यामः, दुहितः ! खेदं मा वह, भगवति ! भुङ्क्ष्व किञ्चित्, पिब पयः, एते तव भ्रातरः, यत् कथयिष्यसि तदेव करिष्यामः, मा स्म रोदनैः प्राणान् संशयपदवीमारोपयः, मा स्म कोमलमिदं शरीरं शोकज्वालावलीढं कार्षीः" इति सहस्रधा बोधनेन कथमपि सम्बुद्धा किञ्चिद् दुग्धं पीतवती। ततश्च मया क्रोडे उपवेश्य, "बालिके ! कथय क्व ते पितरौ ? कथमेतस्मिन्नाश्रमप्रान्ते समायाता ? किं ते कष्टम् ? कथमरोदीः ? किं वाञ्छसि ? किं कुर्मः" इति पृष्टा मुग्धतया अपरिकलित–वाक्पाटवा, भयेन विशिथिलवचन-विन्यासा, लज्जया अतिमन्दस्वरा, शोकेन रुद्धकण्ठा, चकितचकितेव

---

धार्थकोऽत्र माशब्दो न तु माङ्, अत एव लोट्। प्राणान्=असून् "पुंसि भूम्न्यसवः प्राणा" इत्यमरः। आरोपयः, "स्मोत्तरे लङ्चे"ति लङ्। शोक-ज्वालया=शोकाग्निना, अवलीढम्=व्याप्तम्। क्रोडे=अङ्के। मुग्धतया=बालस्वभावादज्ञतया। अपरिकलितम्=अविज्ञातम्, वाक्पाटवम्=भाषण-चातुर्यं यया सा। भयेन=भीत्या। हेतौ तृतीया। विशिथिलः=अस्तव्यस्तः, वचनविन्यासः=भाषणम्, यस्याः सा। चकितचकितेव=अतिभीतेव।

---

के निकट पहुँचा देंगे, बेटी, दुःख मत करो, रानी बिटिया कुछ खाओ, दूध पीओ, ये तुम्हारे भाई हैं, तुम जो कहोगी वही हम करेंगे। रोने से प्राणों को सन्देह में मत डालो, इस कोमल शरीर को शोकाग्नि की लपटों से मत झुलसाओ।" यों हजार तरह समझाने बुझाने से किसी प्रकार उसे विश्वास हुआ, उसने थोड़ा दूध पीया। तदुपरान्त मैंने उसे गोद में लेकर पूछा, "बच्ची, बतलाओ तो तुम्हारे माता-पिता कहाँ रहते हैं ? तुम इस आश्रम के छोर पर कैसे आई ? तुम्हें क्या दुःख है ? तुम क्यों रोई ? क्या चाहती हो ? तुम्हारे लिए हम क्या करें ?" वह निरी बच्ची थी, भाषणचातुरी से बिलकुल अपरिचित थी, मारे डर के उसका बोलना अस्तव्यस्त था, लज्जा के कारण आवाज बहुत धीमी थी, शोक से गला रुँधा था, अत्यन्त चकित हुई-सी उसने किसी प्रकार

कथं कथमपि अबोधयदस्मान् यद्-एषा अस्मिन्नेदीयस्येव ग्रामे वसतः कस्यापि ब्राह्मणस्य तनयाऽस्ति। एनां च सुन्दरीमाकलय्य कोऽपि यवन-तनयो नदीतटान्मातुर्हस्तादाच्छिद्य क्रन्दन्तीं नीत्वाऽपससार। ततः कञ्चिदध्वानमतिक्रम्य यावदसिधेनुकां सन्दर्श्य बिभीषिकयाऽस्याः क्रन्दन-कोलाहलं शमयितुमियेष; तावदकस्मात्कोऽपि काल-कम्बल इव भल्लूको वनान्तादुपाजगाम। दृष्ट्वैव यवन-तनयोऽसौ तत्रैव त्यक्त्वा कन्यकामिमां शाल्मलितरुमेकमारुरोह। विप्रतनया चेयं पलाश पलाशि-श्रेण्यां प्रविश्य घुणाक्षरन्यायेन इत

---

नेदीयसि = अतिनिकटे। "अन्तिकबाढयोर्नेदसाधा" वित्यन्तिकस्य नेदादेशः। आकलय्य = निश्चित्य। इयं न ब्राह्मणतनया किन्तु क्षत्रियतनया स्नातुं च गता न मात्रा सह, अपि तु दास्या, पुरोहितं पितरं दासीं च मातरं मेन इत्यग्रेतनकथया स्पष्टीभविष्यति। असिधेनुकाम् = छुरिकाम्। "छुरिका चासिधेनुके" त्यमरः। बिभीषिकया = भयप्रदर्शनेन। कालश्चासौ कम्बल इति कर्मधारयः। कृष्णवाची कालशब्दः। कालस्य = यमस्य कम्बल इवेति वा। शाल्मलितरुलोके "सेंमर" इति निगद्यते। पलाशाः = किंशुकाः, ते च ते पलाशिनः = तरवः, तेषां श्रेण्याम् = पङ्क्तौ। पलाशानि पत्राणि वा, "पत्रं पलाशं छदनम्" इत्यमरः। घुणाक्षरन्यायेन,

---

बड़ी कठिनाई से हमें समझाया कि यह इसी अतिनिकटवर्ती गाँव में रहनेवाले किसी ब्राह्मण की कन्या है। सुन्दरी देखकर कोई मुसलमान का लड़का नदी के किनारे से माँ के हाथ से छीन कर रोती-बिलखती हुई इसे लेकर भागा। कुछ मार्ग तय कर जब उसने छूरा दिखा कर भयप्रदर्शन द्वारा इसके रोनें का हल्ला शान्त करना चाहा; तो इतने में एकाएक काला कम्बल-सा एक रीछ बन के छोर से आ निकला। उसे देखते ही वह मुसलमान का लड़का इस कन्या को वहीं पर छोड़ कर एक सेंमर के पेड़ पर चढ़ गया। और यह ब्राह्मण-बालिका ढाक के पेड़ों के झुरमुट में प्रवेश कर घुणाक्षरन्याय से इधर ही आ निकली,

एव समायाता यावद्भयेन पुना रोदितुमारब्धवती; तावदस्मच्छात्रेणैवाऽऽनीतेति।

तदाकर्ण्य कोपज्वालाज्वलित इव योगी प्रोवाच-"विक्रमराज्येऽपि कथमेष पातकमयो दुराचाराणामुपद्रवः?" ततः स उवाच—

महात्मन्! क्वाधुना विक्रमराज्यम्? वीरविक्रमस्य तु भारतभुवं विरहय्य गतस्य वर्षाणां सप्तदश-शतकानि व्यतीतानि। क्वाधुना मन्दिरे मन्दिरे जयजय-ध्वनिः? क्व सम्प्रति तीर्थे तीर्थे घण्टानादः? क्वाद्यापि मठे मठे वेदघोषः? अद्य हि वेदा विच्छिद्य वीथीषु विक्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुरा-

---

काष्ठवेधकैः कृमिभिः काष्ठानुवेधे क्रियमाणे यथाऽकस्मादक्षरमिव प्रतीयते, तथा यत्रावितर्कित-कार्य-सिद्धिस्तत्रेत्थमभिधीयते। पुना रोदितुम्, "रो रि" इति लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽण" इति दीर्घः।

विरहय्य=परित्यज्य। सप्तदशशतकानि, शिवराजसमयसूचनार्थमिदम्। शिवराजकालिकयवनदुराचारान्वर्णयति—क्वेत्यादि। मठे मठे=प्रतिच्छात्रालयम्। "मठश्छात्रादिनिलयः" इत्यमरः। वेदाः=वेदपुस्तकानि। विच्छिद्य=विपाट्य, वीथीषु=पथिषु, उद्धूय=उत्तोल्य। धूम एव ध्वजो येषां ते तेषु=वह्निषु। ध्मायन्ते=ज्वाल्यन्ते। पुराणानि=

---

जब यह मारे भयके पुनः रोने लगी तब हमारा विद्यार्थी इसे ले आया।

यह सुन कर क्रोधाग्नि की लपटों से प्रदीप्त हुए-से योगिराज बोले—"विक्रम के राज्य में भी अत्याचारियों का यह पापमय उपद्रव कैसा?"

तदनन्तर उन्होंने (ब्रह्मचारी गुरु ने) कहा—"महात्मा जी, अब विक्रम-राज्य कहाँ है? वीर विक्रमादित्य को तो भारतभूमि को छोड़ कर गये हुए सत्रह सौ वर्ष बीत गये हैं। अब प्रतिमन्दिर में जय-जयकार कहाँ? अब प्रत्येक तीर्थ में घण्टा-निनाद कहां? आज प्रत्येक पाठशाला में वेद-घोष कहाँ? आज तो वेद की पोथियाँ फाड़-फाड़ कर सड़कों पर बिखेरी जाती हैं, धर्मशास्त्र के ग्रन्थ अस्त-व्यस्त कर अग्नि में

णानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्रंशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते। "क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित्तुलसीवनानि छिद्यन्ते, क्वचिद्दारा अपह्रियन्ते, क्वचिद्धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद्रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः" इत्येव-श्रूयतेऽवलोक्यते च परितः।

८ तदाकर्ण्य दुःखितश्चकितश्च योगिराडुवाच—" कथमेतत् ?

---

ब्रह्मवैवर्त्तादीनि। पिष्ट्वा = चूर्णीकृत्य। भाष्याणि = सूत्रव्याख्यानानि वात्स्यायनादिनिर्मितानि। भ्राष्ट्रेषु = भर्जनपात्रेषु। " क्लीबेऽम्बरीषं भ्राष्ट्रो ने " त्यमरः। "भाड" इति हिन्दी। दाराः = भार्याः। दृ विदारण इत्यस्माण्णिजन्तात् "दारजारौ कर्त्तरि णि लुक् चे" ति घञ्। "दाराक्षत-लाजासूनां बहुत्वम्"।

क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्।
क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः॥

इति हेमचन्द्रानुसारेण टाबन्तोऽप्ययम्। यथा च "दारा त्रय" इति पद्ये दृश्यते तथा टाबन्तस्यैकवचनादिष्वपि प्रयोगस्तदिष्टोऽवधार्यते। क्वाधुने-त्यारभ्य परित इत्यन्ते समतानाम गुणो दण्डिमते। प्रसादस्तु सर्वसम्मतः। रीतिर्वैदर्भी।

---

झोंके जाते हैं, पुराण की पुस्तकें पीस कर पानी में फेंकी जाती हैं, भाष्य-ग्रन्थ तोड़-मरोड़ कर भाड़ों में झोंके जाते हैं। "कहीं पर मन्दिर तोड़े जाते हैं, तो कहीं पर तुलसीवन रौंदे जाते हैं; कहीं पर स्त्रियोंका अपहरण होता है, तो कहीं पर धन-सम्पत्ति लूटी जाती है; कहीं करुणक्रन्दन है, तो कहीं रुधिर की धाराएँ हैं, कहीं आग लगाई जाती है और कहीं घर धराशायी किये जाते हैं।" चारों ओर यही सुनाई देता है और यह दिखाई देता है।

यह सुनकर खिन्न और विस्मित हुए योगिराज ने कहा—"यह

ह्य एव पर्वतीयाञ्छकान्विनिर्जित्य महता जयघोषेण स्वराजधानी मायातः श्रीमानादित्य-पदलाञ्छनो वीरविक्रमः। अद्यापि तद्विजय-पताका मम चक्षुषोरग्रत इव समद्धूयन्ते, अधुनाऽपि तेषां पटह-गोमुखादीनां निनादः कर्णशष्कुलीं पूरयतीव, तत्कथमद्य वर्षाणां सप्तदश-शतकानि व्यतीतानीति ?"

ततः सर्वेषु स्तब्धेषु चकितेषु च ब्रह्मचारिगुरुणा प्रणम्य कथितम्—

"भगवन् ! बद्ध-सिद्धासनैर्निरुद्ध-निश्वासैः प्रबोधितकुण्डलिनी-

---

पर्वतीयान्=पर्वतप्रान्तस्थान्। स्वराजधानीम्=उज्जयिनीम्। आदित्य-पदलाञ्छनः=आदित्यपदविभूषितः। लक्ष्मवाची लाञ्छनशब्दः, "कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणमि" त्यमरः। समुद्धूयन्ते=कम्पमाना विराजन्ते। पटह—गोमुखादीनाम्=वाद्यानाम्। पटह=नगारा, गोमुख=तुरही इति हिन्दी। भाविकालङ्कारोऽतीतस्य प्रत्यक्षायमाणत्वात्।

भवादृशैः=योगनिरतैः, कालस्य वेगः=गतिर्न ज्ञायत इत्यन्वयः। भवादृशान् विशिनष्टि—बद्धं सिद्धासनम्=योगशास्त्रीय आसनविशेषो यैस्तैः। निरुद्धाः=अन्तर्नियमिताः, निश्वासाः=प्राणा यैस्तैः। प्रबोधिता=उद्योतिता, कुण्डलिनी=पराशक्त्यभिधेया नाडीरूपा प्रधानव्यक्तिस्था-

---

कैसे ? श्रीमान् वीर विक्रमादित्य कल ही पर्वत प्रान्तनिवासी शकों को पराजित कर महान् जय जयकार के साथ अपनी राजधानी उज्जयिनी में प्रविष्ट हुए। आज भी उनकी विजयवैजयन्ती मेरे नेत्रों के सामने मानो लहरा रही है, इस समय भी उन नगाड़े, तुरही आदि बाजों की ध्वनि मानो मेरे कर्ण-विवरों को पूर्ण कर रही है, तो आज कैसे सत्रह सौ वर्ष बीत गये ?"

मुनि के वचन सुन कर सबके स्तब्ध आर विस्मित होने पर ब्रह्मचारी गुरु ने प्रणाम कर कहा—"भगवन्, सिद्धासन बांध कर, सांस रोक कर, कुण्डलिनी को जगा कर दसों इन्द्रियों पर विजय प्राप्त कर, अनाहत

कैर्विजित-दशेन्द्रियैरनाहत-नाद-तन्तुमवलम्ब्याऽऽज्ञाचक्रं संस्पृश्य, चन्द्रमण्डलं भित्त्वा, तेजःपुञ्जमविगणय्य, सहस्रदलकमलस्यान्तः प्रविश्य, परमात्मानं साक्षात्कृत्य, तत्रैव रममाणैर्मृत्युञ्जयैरानन्दमात्रस्वरूपैर्ध्यानावस्थितैर्भवादृशैर्न ज्ञायते कालवेगः। तस्मिन् समये

नम्, यैस्तैः। विजितानि = वशीकृतानि, दशेन्द्रियाणि यैस्तैः। वाक्-पाणि-पाद-पायूपस्थानि पञ्च कर्मेन्द्रियाणि, चक्षुः-श्रोत्र-घ्राण-रसन-त्वगाख्यानि पञ्च ज्ञानेन्द्रियाणि। अनाहतश्चासौ नादः, तस्य तन्तुं = तन्तुतुल्यां सूक्ष्मावस्थालतिकाम्। सुषुम्णामध्ये स्थितं तुरीयं पद्ममनाहतनाम्ना योगशास्त्रे प्रसिद्धम्, तदुत्थो नादोऽनाहतनादः। आज्ञाचक्रम् = भ्रुवोर्मध्ये द्विदलात्मकं चक्रम्। संस्पृश्य = ध्यानावलम्बनं कृत्वा। चन्द्रमण्डलम् = ततः परवर्ति षोडशदलात्मकं चक्रम्। तेजःपुञ्जम् = सोमचक्रवर्तिनं महाप्रकाशम्। सहस्रदलकमलस्य = ब्रह्मरन्ध्रवर्त्तिनः सहस्रारचक्रस्य। परमात्मानम् = परं ब्रह्म। तत्रैव = ब्रह्मणि। रममाणैः = विहरद्भिः। अनिर्वचनीयमानन्दमुपभुञ्जद्भिरिति यावत्। मृत्युञ्जयैः = स्वायत्तीकृतकालवृत्तिभिः, आनन्दमात्रस्वरूपैः = आनन्दमये ब्रह्मणि लीनत्वात्तत्स्वरूपैः। यत्तु योगशास्त्रमात्रप्रसिद्धानां शब्दानामुपादानं तच्छास्त्रानभिज्ञस्य बोधाजनकमित्यप्रतीतत्वदोषदुष्टमिदमिति—तन्न, अत्रत्यगद्यस्य योगशास्त्रोक्त-ध्यानप्रकारे व्युत्पत्त्याधायकत्वादेतदर्थमेव समुल्लिखितत्वाच्च। अत एव "न सा विद्या न तच्छास्त्रमि"त्यादिना साहित्यस्य व्युत्पत्त्यापि तदर्थस्य सर्वमयत्वं

नाद की तांत के तुल्य सूक्ष्मावस्था का अवलम्बन कर, भौंहों के बीच में द्विदलरूप चक्र को ध्यान का लक्ष्य बनाकर, चन्द्रमण्डल ( उसके ऊपर के षोडश-दलात्मक चक्र ) को भेद कर, चन्द्रचक्रवर्ती महाप्रकाश का तिरस्कार कर, सहस्रदल कमल के अन्दर प्रविष्ट हो, परमात्मा का साक्षात्कार कर, उन्हीं में रम रहे, मृत्यु के विजेता, केवल आनन्दमात्ररूप हो ध्यान में स्थित आपके सदृश महात्मा लोगों को काल-वेग प्रतीत नहीं होता। उस समय आपने जिन लोगों को देखा

भवता ये पुरुषा अवलोकितास्तेषां पञ्चाशत्तमोऽपि पुरुषो नावलोक्यते। अद्य न तानि स्रोतांसि नदीनाम्, न सा संस्था नगराणाम्, न सा आकृतिर्गिरीणाम्, न सा सान्द्रता विपिनानाम्। किमधिकं कथयामो भारतवर्षमधुना अन्यादृशमेव सम्पन्नमस्ति"—

इदमाकर्ण्य किञ्चित्स्मित्वेव परितोऽवलोक्य च योगी जगाद-

"सत्यं न लक्षितो मया समय-वेगः। यौधिष्ठिरे समये कलित-समाधिरहं वैक्रम-समये उदस्थाम्। पुनश्च वैक्रम-समये समाधिमाकलय्य अस्मिन् दुराचारमये समयेऽहमुत्थितोऽस्मि। अहं पुनर्गत्वा समाधिमेव कलयिष्यामि, किन्तु तावत्सङ्क्षिप्य कथ्यतां का दशा भारतवर्षस्येति"।

---

सूचितम्। कथमन्यथा "बहिर्विकारं प्रकृतेः पृथगि" त्यादीनां "वागर्थाविव संपृक्तावि"त्यादीनाञ्च न तद्दोषदुष्टत्वमित्यलमसदावेशेन।

पञ्चाशत्तमः = पञ्चाशत्संख्यापूरकः। कैमुतिकन्याय-सूचकोऽपि। यौधिष्ठिरे = युधिष्ठिरस्यायं समयो यौधिष्ठिरस्तस्मिन्।

---

होगा, उनकी पचासवीं पीढ़ी का पुरुष भी इस समय नहीं दिखाई देता। आज नदियों के वे स्रोत नहीं रहे, नगरों की वह स्थिति नहीं रही, पर्वतों का वह आकार नहीं रहा और नहीं रही जंगलों की वह गहनता। अधिक क्या कहें भारतवर्ष इस समय अन्य-सा ही हो गया है।"

यह सुनकर थोड़ा-सा मुसकिराकर और चारों ओर दृष्टि डाल कर योगिराज ने कहा—"सचमुच मुझे समय के वेग की प्रतीति नहीं हुई। मैं युधिष्ठिर के शासन काल में समाधि लगा कर विक्रम के शासन काल में जागा और फिर विक्रम के शासन काल में समाधिस्थ होकर इस अत्याचारमय समय में जागा हूं, मैं फिर जाकर समाधि ही लगाऊँगा, किन्तु तब तक संक्षेप में कहिये भारतवर्ष की क्या दशा है?"

तत्संश्रुत्य भारतवर्षीय-दशा-संस्मरण-संजात-शोको हृदयस्थ-प्रसाद-सम्भारोद्गिरण–श्रमेणेवातिमन्थरेण स्वरेण "मा स्म धर्मध्वंसन–घोषणैर्योगिराजस्य धैर्यमवधीरय" इति कण्ठं रुन्धतो बाष्पान-विगणय्य, नेत्रे प्रमृज्य, उष्णं निश्वस्य, कातराभ्यामिव नयनाभ्यां परितोऽवलोक्य, ब्रह्मचारिगुरुः प्रवक्तुमारभत—

"भगवन्! दम्भोलिघटितेयं रसना या दारुण-दानवोदन्तोदीरणैर्न दीर्य्यते, लोहसारमयं हृदयं यत् संस्मृत्य यावनान्परस्सहस्रान् दुराचारान् शतधा न भिद्यते, भस्मसाच्च न भवति। धिग-

---

भारतवर्ष-सम्बन्धिन्या दशायाः संस्मरणेन सञ्जातः शोको यस्य सः। हृदयस्थो यः प्रसादः = प्रसन्नता, तस्य सम्भारः = अतिशयः, तस्योद्गिरणे = वमने यः श्रमः, तेनेवेत्युत्प्रेक्षा। धर्मस्य = श्रुतिप्रतिपाद्यस्य, यद् ध्वंसनम् = उन्मूलनम्, तस्य घोषणैः = कथनैः।

दम्भोलिघटिता = वज्रमयी। "दम्भोलिरशनिर्द्वयोरि"त्यमरः। दारुणानाम् = भयानकानाम्, दानवानाम् = म्लेच्छानाम्, उदन्तस्य = वृत्तान्तस्य। "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादि"त्यमरः। उदीरणैः = कथनैः, लोहसारमयम् = अयोनिर्मितम्। सहस्रात् पराः परस्सहस्रास्तान्। राजद-

---

यह सुनकर भारतवर्ष की दुर्दशा के स्मरण से ब्रह्मचारी गुरु का शोक उमड़ आया, मानो हृदय में स्थित प्रचुर प्रसन्नता के उगलने के श्रम से स्वर धीमा पड़ गया, 'धर्म के विध्वंस की कथाओं से योगिराज के धैर्य को च्युत मत करो' यों मानों कण्ठ को रूँधते हुए आँसुओं की कुछ परवाह न कर ( आँसुओं को कुछ न गिनकर ), नेत्र पोंछ कर गरम साँस छोड़ कर, कातर नेत्रों से चारों ओर देख कर ब्रह्मचारी गुरु ने अति मन्द स्वर से कहना आरंभ किया।

"महाराज! मेरी यह जीभ वज्र से बनी है, तभी तो भीषण म्लेच्छों के वृत्तान्त के कथन से नहीं कट रही है, मेरा हृदय लोहे का बना हुआ है, तभी तो यवनों के हजारों दुराचारों का स्मरण कर इसके सैकड़ों टुकड़े

स्मान्, येऽद्यापि जीवामः, श्वसिमः, विचरामः, आत्मन आर्य्य-वंश्यांश्चाभिमन्यामहे—"

उपक्रमममुमाकर्ण्य अवलोक्य च मुनेर्विमनायमानं हरिद्राद्रवक्षालितमिव वदनम्, निपतद्वारिबिन्दुनी नयने, अञ्चित-रोमकञ्चुकं शरीरम्, कम्पमानमधरम्, भज्यमानञ्च स्वरम्, अवागच्छत् "सकलानर्थमयः, सकल-वञ्चनामयः, सकलपापमयः, सकलोपद्रवमयश्चायं वृत्तान्तः" इति, "अत एव तत्स्मरणमात्रेणापि खिद्यत एष हृदये, तन्नाहमेनं निरर्थं जिग्लापयिषामि, न वा चिखेदयिषामि" इति च विचिन्त्य,—

न्तादित्वात्सहस्रशब्दस्य परनिपातः। पारस्करादित्वात्सुट्। विशेष्यनिघ्नत्वाद्वाच्यलिङ्गता। नास्मज्जीवनं जीवनम्, अपि तु भस्त्रेव श्वसनमिति सूचयन् जीवाम इत्यभिधाय श्वसिम इति।

विमनायमानम् = दुर्मनायमानम्। हरिद्रा = महारजनं, तद्द्रवेण = तद्रसेन, क्षालितमिव = धौतमिव। उत्प्रेक्षा। निपतन्तः = स्खलन्तः, वारिबिन्दवः = अश्रुकणा याभ्यां ते। अञ्चितरोमकञ्चुकम् = सरोमाञ्चम्। जिग्लापयिषामि = ग्लपयितुमिच्छामि। चिखेदयिषामि =

नहीं होते और जलकर राख नहीं हो जाता। हम लोगों को धिक्कार है, जो आज भी जीते हैं, सांस लेते हैं, टहलते हैं और अपने को आर्यों के वंशज मानते हैं।

इस उपोद्घात को सुनकर और मुनि का उदास और हल्दी के रस से धोया-सा मुँह, आँसुओं की वृष्टि कर रहे नेत्र, रोमाञ्चों से भरा शरीर, फड़कता हुआ ओठ तथा रूँधा हुआ गला देख कर योगिराज समझ गये कि यह वृत्तान्त बहुत-से अनर्थों से भरा हुआ, सब प्रकार की वञ्चनाओं का आकर, सब पापों का निधान और सब उपद्रवों से सना हुआ है। अतएव उसके केवल स्मरण से ब्रह्मचारी गुरु के हृदय को ठेस लगती है, इसलिए मैं इसे व्यर्थ में म्लान नहीं करना चाहता और न खिन्न ही करना चाहता हूँ, यह सोच कर—

"मुने! विलक्षणोऽयं भगवान् सकल-कला-कलाप-कलनः सकल-कालनः करालः कालः। स एव कदाचित् पयः-पूर-पूरितान्यकूपार-तलानि मरूकरोति। सिंह-व्याघ्र-भल्लूक-गण्डक-फेरु-शश-सहस्र-व्याप्तान्यरण्यानि जनपदीकरोति, मन्दिर-प्रासाद-हर्म्य-शृङ्गाटक-चत्वरोद्यान-तडाग-गोष्ठमयानि नगराणि च काननीकरोति। निरीक्ष्यतां कदाचिदस्मिन्नेव भारते वर्षे यायजूकै राजसू-

खेदयितुमिच्छामि। सकलानां कलानां यः कलापः = समूहः, तत्कलनः = तन्निर्माता। सकलान् कालयतीति सकलकालनः = सकलजरयिता। कालः = महाकालः। "कालो मृत्यौ महाकाले समये यमकृष्णयोरि"ति मेदिनी। अकूपारतलानि = समुद्रतलानि। "समुद्रोऽब्धिरकूपार"इत्यमरः। मरूकरोति = मरुतुल्यानि करोति। अभूततद्भावे च्विः। गण्डकः = खड्गी, लोके "गैंडा" इति। फेरवः = शृगालाः। "शृगालवञ्चकक्रोष्टु-फेरुफेरवजम्बुका" इत्यमरः। मन्दिराणि = देवनिवासाः। प्रासादाः = भूभृन्निवासाः। हर्म्यम् = धनिकावासः। "हर्म्यादि धनिनां वास"इत्यमरः। शृङ्गाटकम् = चतुष्पथम्। "चौराहा" इति हिन्दी। चत्वरम् = अङ्गणम्। "अङ्गणं चत्वराजिरे" इत्यमरः। उद्यानम् = वाटिका। "पुमानाक्रीड उद्यानम्"इत्यमरः। "गोष्ठं गोस्थानकमि"त्यमरः। "गोशाला" इति हिन्दी। प्राचुर्यार्थे मयट्। एतत्प्रचुराणीत्यर्थः। काननीकरोति = जङ्गलीकरोति। यायजूकैः = इज्याशीलैः। "इज्याशीलो यायजूक" इत्यमरः।

"मुनिजी, यह भगवान् कराल काल बड़ा विलक्षण है, यही सकल कलाओं के समूह का निर्माण करता है और सबको अपनी उदरदरी में निगलनेवाला ( संहार-कर्ता ) भी यही है। यही कभी जलराशि से परिपूर्ण समुद्रतलों को मरुभूमि के सदृश बना डालता है, हजारों शेर, चीते, रीछ, गैंडे, सियार, खरगोशों से भरे जंगलों को नगर बना देता है और प्रचुर मन्दिर, राजभवन, घर, चौराहे, चबूतरे, बाग-बगीचे, तालाब और गोशालाओं से पूर्ण नगरों को जंगल बना देता है। इतिहास के पृष्ठों पर दृष्टि दौड़ाइये, कभी इसी भारतवर्ष में याज्ञिकों ने राजसूय आदि

यादियज्ञा व्ययाजिषत, कदाचिदिहैव वर्ष–वाताऽऽतप-हिम-सहानि तपांसि अतापिषत। सम्प्रति तु म्लेच्छैर्गावो हन्यन्ते, वेदा विदीर्यन्ते, स्मृतयः सम्मृद्यन्ते, मन्दिराणि मन्दुरीक्रियन्ते, सत्यः पात्यन्ते, सन्तश्च सन्ताप्यन्ते। सर्वमेतन्माहात्म्यं तस्यैव महाकालस्येति कथं धीरधौरेयोऽपि धैर्यं विधुरयसि? शान्तिमाकलय्यातिसंक्षेपेण कथय यवनराज्य–वृत्तान्तम्। न जाने किमित्यनावश्यकमपि शुश्रूषते मे हृदयम्"—इति कथयित्वा तूष्णीमवतस्थे।

अथ स मुनिः—"भगवन्! धैर्येण, प्रसादेन, प्रतापेन, तेजसा,

व्ययाजिषत=कृताः। व्युपसृष्टाद् यजेर्लुङि। अतापिषत=तप्तानि। मन्दुरीक्रियन्ते=वाजिशालीक्रियन्ते। "वाजिशाला तु मन्दुरे"त्यमरः। पात्यन्ते, पातिव्रत्यात्। व्यभिचार्यन्त इत्यर्थः। धीरधौरेयः=धीरधुरन्धरः। विधुरयसि=विकलयसि। "वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिष्वि" ति मेदिनी। शुश्रूषते=श्रोतुमिच्छति। "ज्ञाश्रुस्मृदृशां सन" इत्यात्मनेपदम्।

सनाथितवति=सनाथं कृतवति। धैर्यादिना साकं सनाथीकरणमिति

विविध यज्ञों का अनुष्ठान किया था, कभी यहीं पर ऐसी भीषण तपस्याएँ की गईं थीं, जिनसें वृष्टि, आँधी, घाम और हिमपात का सहन करना मामूली बात थी। परन्तु इस समय म्लेच्छों द्वारा गौओं की हत्या की जाती है, वेदों की पोथियाँ फाड़ी जाती हैं, स्मृतियाँ कुचली जाती हैं, मन्दिर अश्वशाला बनाये जाते हैं, सती-साध्वी स्त्रियों का पातिव्रत्य नष्ट किया जाता है और सन्तों को संताप पहुँचाया जाता है। यह सब उसी महाकाल की महिमा है। आप तो धीरों के अग्रगण्य है, फिर क्यों धैर्य को शिथिल करते हैं। शान्ति का अवलम्बन कर अत्यन्त संक्षेप से यवन-राज्य का थोड़ा वृत्तान्त कहिये। यद्यपि यह हमारे लिए अनावश्यक है, फिर भी न मालूम क्यों मेरा हृदय उसे सुनना चाहता है।" यह कह कर योगिराज चुप हो गये।

योगिराज के चुप होने के अनन्तर मुनि ने कहा—"भगवन्, जब राजचूडामणि वीर विक्रमादित्य धीरता, प्रसन्नता, प्रभाव, तेज,

वीर्येण, विक्रमेण, शान्त्या, श्रिया, सौख्येन, धर्मेण, विद्यया, च सममेव परलोकं सनाथितवति तत्र भवति वीरविक्रमादित्ये, शनैः शनैः पारस्परिक-विरोध-विशिथिलीकृत-स्नेहबन्धनेषु राजसु, भामिनी-भ्रूभङ्ग-भूरिभाव-प्रभाव-पराभूत-वैभवेषु भटेषु, स्वार्थ-चिन्ता-सन्तान-वितानैकतानेष्वमात्यवर्गेषु, प्रशंसामात्रप्रियेषु प्रभुषु, "इन्द्रस्त्वं वरुणस्त्वं कुवेरस्त्वम्" इति वर्णनामात्रसक्तेषु बुधजनेषु, कश्चन गजिनी-स्थाननिवासी महामदो यवनः ससेनः प्राविशद् भारते वर्षे। स च प्रजा विलुण्ठ्य, मन्दिराणि निपात्य, प्रतिमा विभिद्य, पर-

सहोक्तिरलङ्कारः। सौकुमार्यं नाम गुणः, अमङ्गलस्य विस्पष्टमनभिधानात्। तत्र भवति = श्रेष्ठे। "तत्र च भावेने"ति सप्तमी। पारस्परिकविरोधेन विशिथिलीकृतानि = शिथिलतामापादितानि स्नेहबन्धनानि यैस्तेषु। भामिनीनाम् = मानिनीनाम्, ये भ्रूभङ्गाः = सकटाक्षेक्षणानि, भूरिभावाः = हावाद्याश्चेष्टाः, तेषां प्रभावेण परभूतानि = तिरस्कृतानि, वैभवानि = धनानि येषां तादृशेषु। गजिनी = "ग़ज़नी" इति लोके प्रसिद्धा। संस्कृतशब्दापभ्रंशीभूता एव सर्वे भाषाशब्दा इत्यभिप्रायेण प्रायः सार्थकसंस्कृतशब्दानामेव नामादिष्वपि प्रयोगः। महामदः = महमूद इति लोकप्रसिद्धं तन्नाम, देशनाम्ना "महमूद ग़ज़नवी" इति वृत्तेषु समुल्लिखितम्।

बल, पराक्रम, शान्ति शोभा, सुख, धर्म और विद्या के साथ परलोक को कूच कर गये; राजाओं में पारस्परिक विरोध से स्नेह-बन्धन ढीला पड़ गया, भट लोग कामिनियों के कटाक्षदर्शन और हाव-भाव आदि विविध चेष्टाओं के प्रभाव से धन-दौलत बरबाद कर चुके, मंत्री लोग स्वार्थचिन्ता में संलग्न हो चुके और केवल प्रशंसा ही राजाओं को प्रिय लगने लगी एवं विद्वान् पुरुषों में "आप इन्द्र हैं, आप वरुण है, आप कुबेर हैं" यों केवल चाटुकारिता ही शेष रह गई, उस समय गजनीनिवासी महमूद नाम के किसी मुसलमान ने सेना के साथ भारतभूमि में प्रवेश किया। वह प्रजा को लूट कर, मन्दिरों को धराशायी कर,

श्शतान् जनांश्च दासीकृत्य, शतश उष्ट्रेषु रत्नान्यारोप्य स्वदेशम-नैषीत्। एवं स ज्ञातास्वादः पौनःपुन्येन द्वादशवारमागत्य भारत-मलुलुण्ठत्। तस्मिन्नेव च स्वसंरम्भे एकदा गुर्जरदेश-चूडायितं सोमनाथतीर्थमपि धूलीचकार। अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते; परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत्। तत्र हि महार्ह-वैदूर्य-पद्मराग-माणिक्य-मुक्ताफलादि-जटितानि कपा-टानि, स्तम्भान्, गृहावग्रहणीः, भित्तीः, वलभीः, विटङ्कानि च निर्मथ्य, रत्ननिचयमादाय, शतद्वय-मणसुवर्ण-शृङ्खलावलम्बिनीं चञ्चच्चाकचक्य-चकितीकृतावलोचक-लोचन-निचयां महाघण्टां

अलुलुण्ठत् = लुण्ठितवान्। गुर्जरदेशचूडायितम् = गुर्जरदेशभूषणतु-ल्यम्। धूलीचकार = नाशयामास। जटितानि, 'जट झट सङ्घात' इत्यस्य प्रयोगः। "जड़े हुवे" इति हिन्दी। गृहावग्रहणीः = देहलीः। भित्तीः = कुड्यानि। वलभीः = गोपानसीः। "गोपानसी तु वलभिच्छादने वक्रदा-रुणी" त्यमरः। "छज्जा" इति हिन्दी "धरन" इति वा। मणशब्दो लोके "मन" इति ख्यातः। चञ्चता = समुच्छलता, चाकचक्येन, चकिती-कृताः = विस्मेरीकृताः, अवलोचकलोचनानाम् = द्रष्टृजननयनानाम्,

देवमूर्त्तियों को तोड़-फोड़ कर, हजारों लोगों को दास बना कर, सैकड़ों ऊँटों पर रत्नराशि लाद कर अपने देश ले गया। उसे लूट-खसोट का स्वाद लग गया था, अतः इसी तरह बार-बार आकर बारह बार उसने भारत वर्ष को लूटा। उसी अपनी चढ़ाई के सिलसिले में एक बार उसने गुर्जर देश के भूषण-से सोमनाथ तीर्थ को भी धूल में मिला दिया। आज तो उस तीर्थ का नाम भी किसी को याद नहीं है, लेकिन उस समय उसका लोकोत्तर वैभव था। उसमें बहुमूल्य वैदूर्य (वालवायज), पद्मराग, हीरे, मोती आदि रत्नों से जड़े हुए किवाड़, खम्भे, देहली, दीवार, छज्जे, कबूतरों के दरबे सबको छान-छान कर रत्नराशि लूट कर, दो सौ मन वजन की सोने की सिकड़ी पर लटकने वाली देदीप्यमान चम-चमाहट से दर्शकों के नेत्रों को चमत्कृत कर देनेवाली महाघण्टा को जबर-

प्रसह्य संगृह्य, महादेवमूर्तावपि गदामुदतूतुलत्।

अथ "वीर! गृहीतमखिलं वित्तम्, पराजिता आर्य्यसेनाः, बन्दीकृता वयम्, सञ्चितममलं यशः, इतोऽपि न शाम्यति ते क्रोधश्चेदस्मांस्ताडय, मारय, छिन्धि, भिन्धि, पातय, मज्जय, खण्डय, कर्तय, ज्वलय, किन्तु त्यजेमामकिञ्चित्करीं जडां महादेव-प्रतिमाम्। यद्येवं न स्वीकरोषि तद् गृहाणास्मत्तोऽन्यदपि सुवर्णकोटिद्वयम्, त्रायस्व, मैनां भगवन्मूर्तिं स्प्राक्षीः" इति साम्रेडं कथयत्सु रुदत्सु पतत्सु विलुण्ठत्सु प्रणमत्सु च पूजकवर्गेषु; 'नाहं मूर्तीर्विक्रीणामि; किन्तु भिनद्मि" इति संगर्ज्य, जनता या हाहाकार-कलकलमाकर्णयन् घोरगदया

---

निचयः = समूहो यया ताम्। उदतूतुलत् = उदतिष्ठिपत्। प्रहृतवानिति यावत्। उत्पूर्वकादुन्मानार्थकाच्चौरादिकात्तुलधातोः कर्त्तरि लुङि। "अकिञ्चित्करीं जडामि"ति तदीयबोधमादाय तत्प्रीतये वा, न वस्तुगत्येति बोध्यम्। स्प्राक्षीः, माङ्योगे लुङ्, अत एव नाट्। स्पार्क्षीः, स्पृक्ष इत्यापि रूपे। जनतायाः = जनसमूहस्य।

---

दुस्ती अपने अधीन कर उसने महादेव जी की मूर्ति पर भी गदा उठाई।

उसके बाद "वीर, आपने सम्पूर्ण धन ले लिया है, आर्य-सेना को परास्त कर दिया, हम लोगों को कैद कर लिया, निर्मल यश का संचय कर लिया, इससे भी आपकी क्रोधाग्नि शान्त नहीं होती है, तो हमें पीटिये, मारिये, चीरिये, काटिये, पहाड़ से गिराइये, जल में डुबाइये, टुकड़े टुकड़े कीजिए, बूटी बूटी काट डालिये, जला डालिये, किन्तु इस बेचारी जड़ महादेव-मूर्ति को छोड़ दीजिये, यदि हमारी इस प्रार्थना को भी स्वीकार नहीं करते हो तो हम लोगों से और दो करोड़ स्वर्णमुद्रा लीजिये, हमें बचाइये, इस भगवन्मूर्ति को मत छूइये।" पुजारी वर्ग के इस तरह बार बार प्रार्थना करने, गिड़गिड़ाने, पैरों पर पड़ने, भूमि पर लोटने और प्रणाम करने पर 'मैं मूर्ति को बेचता नहीं, किन्तु तोड़ता हूँ' यों गरज कर उसने जनता की हाहाकार ध्वनि के बीच भीषण गदा से मूर्ति

मूर्तिमतुत्रुटत् । गदापातसमकालमेव चानेकार्बुदपद्ममुद्रामूल्यानि रत्नानि मूर्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त । स च दग्धमुखः तानि रत्नानि मूर्तिखण्डानि च क्रमेलकपृष्ठेष्वारोप्य सिन्धुनदमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत् ।

अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे ( १०८७ ) वैक्रमाब्दे सशोकं सकष्टञ्च प्राणांस्त्यक्तवति महामदे, गोरदेशवासी कश्चित् शहाबुद्दीन-नामा प्रथमं गजिनीदेशमाक्रम्य, महामदकुलं धर्मराजलोकाध्वन्यध्वनीनं विधाय, सर्वाः प्रजाश्च पशुमारं मारयित्वा, तद्रुधिरार्द्रमृदा गोरदेशे बहून् गृहान् निर्माय चतुरङ्गिण्याऽनीकिन्या

अतुत्रुटत् = अभिनत , भेदितवानित्यर्थः । उच्छलितानि = उत्पतितानि । दग्धमुखः = दुष्टः । "मुँहजरा" इति हिन्दी । क्रमेलकाः = उष्ट्राः, "उष्ट्रे क्रमेलकमयमहाङ्गा" इत्यमरः । विजयध्वजिनीम् = विजयध्वजवतीम् । "न कर्मधारयादि" ति निषेधस्यासार्वत्रिकत्वमुक्तम् ।

गोरदेशः = सिन्धुनद्याः पश्चिमदिशि यवनप्रधानो देशविशेषः । शहाबुद्दीनमपि देशनाम्ना "शहाबुद्दीन गोरी" ति कथयन्ति । अध्वनीनम् = पान्थम् । चतुर्भिरङ्गैः समेता चतुरङ्गिणी । "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमि" त्यमरः । अनीकिन्या = सेनया । शीतलशोणि-

तोड़ ही दी । गदा के गिरते ही मूर्ति के अन्दर से अनेक अरब पद्म मूल्य के रत्न बिखर कर चारों ओर छिटक गये । वह कलमुँहा उन रत्नों और मूर्त्ति के टुकड़ों को ऊँटों की पीठ पर लाद कर, सिन्धु नद को पार कर अपनी विजयपताकावाली गजनी नाम की राजधानी में प्रविष्ट हुआ ।

तत्पश्चात् समय के फेर से संवत् १०८७ वि० में महमूद की शोक और क्लेश के साथ मृत्यु होने पर 'गोर' देशनिवासी शहाबुद्दीन नामक किसी तुर्क ने पहले गजनी पर आक्रमण कर महमूद के वंशजों को यमलोक के पथ के पथिक बना कर, सब प्रजा को पशुओं की भाँति मार कर, उनके रुधिर से गीली मिट्टी से गोर देश में बहुत-से महल बना कर, चतुरङ्गिणी सेना के साथ भारतवर्ष में प्रवेश कर

भारतवर्षं प्रविश्य, शीतलशोणितानप्यसयन् पञ्चाशदुत्तर-द्वादश-शतमितेऽब्दे ( १२५० ) दिल्लीमश्वयाम्बभूव।

ततो दिल्लीश्वरं पृथ्वीराजं कान्यकुब्जेश्वरं जयचन्द्रञ्च पारस्परिक-विरोध-ज्वर-ग्रस्तं विस्मृत-राजनीतिं भारतवर्ष-दुर्भाग्यायमाण-माकलय्यानायासेनोभावपि विशस्य, वाराणसीपर्य्यन्त-मखण्ड-मण्डलमकण्टकमकीटकिट्टं महारत्नमिव महाराज्यमङ्गीचकार। तेन वाराणस्यामपि बह्वोऽस्थिगिरयः प्रचिताः, रिङ्गत्तरङ्ग-भङ्गा गङ्गाऽपि शोणित-शोणा शोणीकृता, परस्सहस्राणि च देवमन्दिराणि

---

तान् = अनुष्णरक्तान्, युद्धेच्छाविरहितान् इति भावः। असयन् = असिना घ्नन्। अश्वयाम्बभूव = अश्वैरतिचक्राम। 'तेनातिक्रामती' ति णिच्। विस्मृता राजनीतिः = "वयं पञ्च वयं पञ्च वयं पञ्च शतञ्च ते। परैः साकं विवादे तु वयं पञ्चोत्तरं शतमि" त्येवं यौधिष्ठिरनीतिः, येन तम्। आकलय्य = अवधार्य। विशस्य = घातयित्वा, अकीटकिट्टम् = कीटकिट्ट-विरहितम्। कीटाः = कृमयः, किट्टम् = मलम्। अस्थिगिरयः = कीकसपर्वताः। गिरिशब्दप्रयोगो महतो नाशकाण्डस्य ध्वननाय। रिङ्गन्तः = चलन्तः, तरङ्गभङ्गाः = ऊर्मिभेदा यस्यां सा। शोणितेन शोणा = रक्ता। शोणीकृता = शोणनदतामापादिता। मेकलगिरिसमुद्भूतो विहारविहारी महानदः

---

युद्धेच्छाविहीन भारतीय जनता को क्लेश पहुँचाते हुए सन् १२५० ई० में दिल्ली पर घोड़ों द्वारा चढ़ाई कर दी।

तदुपरान्त उसने दिल्ली के अधिपति पृथ्वीराज और कन्नौज के राजा जयचन्द को, आपस की फूट रूपी ज्वर से ग्रस्त, राजनीति से कोरे तथा भारतवर्ष के दुर्भाग्य ऐसे जानकर, दोनों को क़त्ल कर, बनारस तक के सारे भूमण्डल के महाराज्य को कीट और मल से अस्पृष्ट महारत्न के समान हथिया लिया। उसने बनारस में भी हड्डियों के बहुत-से पहाड़ चुन दिये, चञ्चल तरङ्गों की परम्पराओं से व्याप्त गङ्गा को रुधिर से लाल कर शोण नद बना डाला और हजारों देवमन्दिर मटियामेट कर दिये।

भूमिसात्कृतानि ।

स एव प्राधान्येन भारते यावनराज्याङ्कुराऽऽरोपकोऽभूत् । तस्यैव च कश्चित् क्रीतदासः कुतुबुद्दीन-नामा प्रथमभारतसम्राट् संजातः । तमारभ्याद्यावधि राक्षसा एव राज्यमकार्षुः । दानवा एव च दीनानदीदलन् । अभूत् केवलम् अकबरशाह-नामा यद्यपि गूढशत्रुर्भारतवर्षस्य, तथापि शान्तिप्रियो विद्वत्प्रियश्च । अस्यैव प्रपौत्रो मूर्तिमदिव कलियुगं, गृहीतविग्रह इव चाधर्मः, आलमगीरोपाधिधारी अवरङ्गजीवः सम्प्रति दिल्लीवल्लभतां कलङ्कयति । अस्यैव पताकाः केकयेषु मत्स्येषु मगधेषु अङ्गेषु वङ्गेषु कलिङ्गेषु च

शोणः । भूमिसात्कृतानि = धूलिसात्कृतानि । भारतसम्राट् = सम्राट्सदृशे लाक्षणिकोऽयं शब्दः ।

राक्षसाः = निर्दयाः हिंसाप्रियाश्च । अदीदलन् = अजीघतन्, हिंसितवन्त इत्यर्थः । गूढशत्रुः = गुप्तरिपुः । राजपुत्रवंश्यैः सहोद्वाहादिसम्बन्धं प्राचारयदिति मुद्रान्तरेण सर्वान् म्लेच्छान् विधित्सुरासीदिति तत्त्वम् । अवरङ्गजीवः = "औरङ्गजेब" इतिनामा ।

वितस्ताया—( झेलम् ) श्चन्द्रभागाया (चनाव) श्चान्तरालवर्त्ती केकय-

उसीने प्रधानतः भारतवर्ष में मुसलमानी राज्य के अङ्कुर का आरोपण किया ( मुसलमानी राज का बीज बोया )। उसीका एक गुलाम, जिसका नाम कुतुबुद्दीन था, भारत का प्रथम सम्राट् हुआ ।

उससे लेकर आजतक भारतभूमि में म्लेच्छों ने ही राज्य किया । दैत्यों ने ही दीनहीन भारतीयों की निर्मम हत्या की । केवल अकबर बादशाह कुछ अच्छा हुआ, यद्यपि वह भी भारतवर्ष का गूढ शत्रु था; फिर भी वह शान्तिप्रिय था और विद्वानों का आदर करता था । उसीका परपोता 'आलमगीर' उपाधिवाला औरङ्गजेब इस समय दिल्ली के शासन को कलङ्कित करता है । यदि उसे मूर्तिमान् कलियुग और देहधारी अधर्म कहा जाय, तो कोई अत्युक्ति न होगी । उसीके झण्डे केकय ( पंजाब ), मत्स्य ( राजपूताना ), मगध ( बिहार ), अङ्ग ( पूर्वी

दोधूयन्ते, केवलं दक्षिणदेशेऽधुनाऽप्यस्य परिपूर्णो नाधिकारः संवृत्तः ।

दक्षिणदेशो हि पर्वत-बहुलोऽस्ति अरण्यानी-सङ्कुलश्चास्तीति चिरोद्योगेनापि नायमशकन्महाराष्ट्रकेसरिणो हस्तयितुम् । साम्प्रत-मस्यैवाऽऽत्मीयो दक्षिणदेश-शासकत्वेन "शास्तिखान"-नामा प्रेष्यत

---

देशः, रामायणसमये "गिरिव्रज" नाम्ना ख्याता नगर्येतदीयराजधान्यासीत् । भरतजनन्याः केकय्या जन्मभूरियमेवेति रामायणे व्यक्तम् । गिरिव्रजस्य ( गिरझक ) जवनसाम्राज्यकाले "जलालपुर" इति नामकरणमभूत् ।

इन्द्रप्रस्थात्पश्चिमस्थो दृषद्वत्याश्च दक्षिणस्थो मरुभूमेः पूर्वस्थो भूखण्डो मत्स्यदेशः । मगधदेशः = कीकटापरनामा वर्त्तमान-दक्षिणविहारो गया-राजगृहादिसमवेतः । अङ्गदेशः = वर्त्तमान-भागलपुरसंवलितो भूखण्ड-विशेषः । अङ्गदेशात्पूर्वस्थितोऽधुना बङ्गालनाम्ना ख्यातो वङ्गदेशः । कलिङ्गदेशः = 'उड़ीसा' इति साम्प्रतं ख्यातः ।

अरण्यानी = महदरण्यम् , तया सङ्कुलः = व्याप्तः । महाराष्ट्रकेसरिणः, अत्र केसरिपदं श्रेष्ठवाचकम् ,

"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥" इत्यमरः ।

हस्तयितुम् = हस्ते कर्त्तुं । वशीकर्त्तुमिति यावत् । शास्तिखानः =

---

बिहार ), बङ्ग ( बंगाल ), कलिङ्ग ( उड़ीसा ) में फहराते हैं, केवल दक्षिण देश में अभी तक उसका पूरा अधिकार नहीं हो पाया है ।

दक्षिण देश में पर्वतों की अधिकता है और गहन जंगल भी प्रचुर मात्रा में हैं, इसलिए चिर काल के उद्योग से भी वह सिंहसदृश मराठों को अपने अधीन करने में समर्थ नहीं हुआ । सुनने में आया है कि इस समय उसीका सगा-सम्बन्धी शाइस्ता खाँ दक्षिण देश का शासक

इति श्रूयते महाराष्ट्रदेशरत्नम्, यवन-शोणित-पिपासाऽऽकुल-कृपाणः, वीरता-सीमन्तिनी-सीमन्त-सुन्दर-सान्द्र-सिन्दूर-दान-देदीप्यमान-दोर्दण्डः, मुकुटमणिर्महाराष्ट्राणाम्, भूषणं भटानाम्, निधिर्नीतीनाम्, कुलभवनं कौशलानाम्, पारावारः परमोत्साहानाम्, कश्चन प्रातः स्मरणीयः, स्वधर्माऽग्रह-ग्रह-ग्रहिलः, शिव इव धृतावतारः शिववीरश्चास्मिन् पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति विजयपुराधीश्वरेण साम्प्रतमस्य प्रवृद्धं वैरम्। "कार्यं वा साधयेयं देहं वा पातयेयम्" इत्यस्य सारगर्भा महती

"शाइस्ता खां" इति प्रसिद्धं नाम। रत्नशब्दस्य नित्यक्लीबत्वम्। यवनानां =मोहमदानां, शोणितस्य पिपासायामाकुलः कृपाणो यस्य सः। वीरस्य भावो वीरता=शूरता, सैव सीमन्तिनी=ललना, तस्याः सीमन्ते=केशवेशे, सुन्दरं सान्द्रं=घनं, यत्सिन्दूरदानं=नागकेशरमर्चनं, तेन देदीप्यमानो दोर्दण्डः=बाहुदण्डो यस्य सः। श्रुत्यनुप्रासः। स्वधर्मस्य=सनातनधर्मस्य, य आग्रहग्रहः=हठादपि पालनम्, तत्र ग्रहिलः=दृढतरः। शिव इवेत्युत्प्रेक्षा। शिववीरः="शिवाजी" इति विख्यातः। पुण्यनगरात्="पूना" इति ख्यातात्। नेदीयसि=अति-

बनाकर भेजा जा रहा है। महाराष्ट्र देश के रत्न, मरहट्टों के मुकुटमणि, योद्धाओं के आभूषण, नीतियों के निधान, निपुणताओं के कुलगृह, परम उत्साहों के सागर, सनातन धर्म के दृढ़तम पक्षपाती, अवतारधारी शिव ऐसे प्रातःस्मरणीय वीर शिवाजी, जिनकी तलवार तुर्कों के रुधिकर की प्यासी है, जिनके बाहुदण्ड वीरतारूपी नायिका की मांग पर सुन्दर चटकीला सिन्दूर लगाने से देदीप्यमान हैं, पूना से अति निकट 'सिंह' किले में सेना सहित विराजमान हैं।

बीजापुर के अधिपति के साथ इस समय इनका मनमुटाव बढ़ा हुआ है। "या तो कार्य को ही पूरा करूँगा या देह को ही नष्ट कर डालूँगा" यह इनकी सारगर्भित प्रबल प्रतिज्ञा है। ये ही सतियों, सन्तों,

प्रतिज्ञा। सतीनाम्, सताम्, त्रैवर्णिकस्य आर्यकुलस्य, धर्मस्य, भारतवर्षस्य च आशा-सन्तान-वितानस्यायमेवाऽऽश्रयः। इयमेव वर्तमाना दशा भारतवर्षस्य। किमधिकं विनिवेदयामो योग-बलावगत-सकल-गोप्यतम-वृत्तान्तेषु योगिराजेषु" इति कथयित्वा विरराम।

तदाकर्ण्य विविध-भाव-भङ्ग-भासुर-वदनो योगिराजो मुनि-राजं तत्सहचरांश्च निपुणं निरीक्ष्य, तेषामपि शिववीरान्तरङ्गता-मङ्गीकृत्य, मुनिवेषव्याजेन स्वधर्मरक्षाव्रतिनश्चोररीकृत्य, "विजयतां शिववीरः, सिद्धयन्तु भवतां मनोरथाः" इति मन्दं व्याहार्षीत्।

अथ किमपि पिपृच्छिषामीति शनैरभिधाय बद्धकरसम्पुटे सोत्कण्ठे जटिलमुनौ "अवगतम्, यवनयुद्धे विजय एव, दैवादप-

---

श्रयेनान्तिक इति नेदीयान्, तस्मिन्। आशायाः, सन्तानम् = परम्परा, तस्य। वितानम् = विस्तारः, तस्य। योगबलेन = योगसामर्थ्येन, अवगतः = विज्ञातः, सकलो गोप्यतमः = रहस्यात्मको वृत्तान्तो यैस्तेषु।

---

आर्यों (ब्राह्मण, क्षत्रिय, वैश्यों), धर्म और भारतवर्ष की विविध आशाओं के आधार हैं। यही भारत की वर्तमान दशा है। आपको तो योगबल से सभी अतिगुप्त वृत्तान्त भी विदित हैं, आप से क्या अधिक निवेदन करें?" यह कह कर मुनिजी चुप हो गये।

यह वृत्तान्त सुनकर योगिराज का मुख विविध भावभङ्गियों से खिल उठा, उन्होंने मुनिवर और उनके साथियों को गौर से देखकर, ये भी महाराज शिवाजी के अन्तरङ्ग हैं, यह ताड़कर, उन्हें मुनि के वेष के बहाने अपने धर्म की रक्षा करने में बद्धपरिकर जानकर धीरे-से कहा— "वीर शिवाजी की विजय हो, आप लोगों के मनोरथ पूर्ण हों।"

उसके बाद "मैं कुछ पूछना चाहता हूँ" धीरे यह कह कर जटाधारी मुनि के सुनने के लिए उत्सुक और बद्धकरकमल होने पर योगिराज ने कहा—"मैंने समझ लिया, तुर्कों के युद्ध में उन्हीं की जीत

द्रस्तोऽपि च सखिसाहाय्येनाऽऽत्मानमुद्धरिष्यति" इति समभाणीत्। मुनिश्च गृहीतमित्युदीर्य, पुनः किञ्चिद्विचार्य्येव, स्मृत्वेव च, दीर्घमुष्णं निःश्वस्य, रोरुध्यमानैरपि किञ्चिदुद्गतैर्बाष्पविन्दुभिराकुलनयनो 'भगवन्! प्रायो दुर्लभो युष्मादृक्षाणां साक्षात्कार इत्यपराऽपि पृच्छाऽऽच्छादयति माम्' इति न्यवेदीत्। स च "आम्! ऊरीकृतम्, जीवति सः, सुखेनैवाऽऽस्ते" इत्युदतीतरत्। अथ "तं कदा द्रक्ष्यामीति" पुनः पृष्टवति "तद्विवाहसमये द्रक्ष्यसि" इत्यभिधाय, बहूनि सान्त्वना-वचनानि च गम्भीरस्वरेणोक्त्वा, सपदि उपत्यकाम्, गण्डशैलाम्, अधित्यकाञ्चाऽऽरुह्य पुनस्तस्मिन्नेव पर्वत-

---

दीर्घमुष्णं निश्वस्य, गभीरशोकद्योतकमिदम्। रोरुद्ध्यमानैः = भृशं वार्यमाणैः। उररीकृत्य=स्वीकृत्य। उदतीतरत् = उत्तरयाञ्चकार। सान्त्वनावचनानि = सामवाक्यानि। उपत्यकाम् = अद्रेरधः सन्निहितां भूमिम्। गण्डशैलान् = पर्वतात् पतितान् स्थूलपाषाणान्। "गण्डशैलास्तु च्युताः स्थूलोपला गिरेरि" त्यमरः। अधित्यकाम् = अद्रेरूर्ध्वां भूमिम्। "उपा-

---

अवश्यम्भाविनी है, दुर्दैव से उन पर आपत्तियाँ आयेंगी, पर मित्रों की सहायता से वे अपने को उबार लेंगे।" मुनि ने भी "भगवन्, समझ गया" कह कर फिर कुछ विचारने और स्मरण करने का-सा अभिनय कर लम्बी और गरम सांस लेकर, आँसुओं को रोकने की लाख चेष्टा की, तो भी वे कुछ निकल ही आये। अश्रु-विन्दुओं से व्याप्त नेत्रवाले उन्होंने निवेदन किया—"भगवन्! आप ऐसे महात्माओं के दर्शन प्रायः दुर्लभ होते हैं, अतएव दूसरा भी प्रश्न मुझे ललचा रहा है।" योगिराज ने भी उत्तर दिया "हाँ स्वीकार किया, वह जीवित है, और सुखपूर्वक ही है।" इसके अनन्तर मुनि के "उससे कब मेरी मुलाकात होगी?" फिर यह प्रश्न करने पर "उसके विवाह के समय उससे तुम्हारी भेट होगी।" यह कहकर गंभीर स्वर से अनेक सान्त्वना-वाक्य कह कर योगिराज एक ही क्षण में पर्वत की तलहटी, पर्वत से गिरी हुई बड़ी बड़ी शिलाओं और पर्वत के ऊपर की भूमि पर चढ़कर पुनः उसी गुफा में

कन्दरे तपस्तप्तुं जगाम।

ततः शनैः शनैर्निर्यातेष्वपरिचितजनेषु, संवृत्ते च निर्मक्षिके, मुनिर्गौरबटुमाहूय, विजयपुराधीशाऽऽज्ञया शिववीरेण सह योद्धुं ससेनं प्रस्थितस्य अपजलखानस्य विषये यावत्किमपि प्रष्टुमियेष; तावत्पादचारध्वनिमिव कस्याप्यश्रौषीत्। तमवधार्यान्यमनस्के इव मुनौ, गौरबटुरपि तेनैव ध्वनिना कर्णयोः कृष्ट इव समुत्थाय, निपुणं परितो निरीक्ष्य, पर्य्यट्य, "कोऽयम्?" इति च साम्रेडं व्याहृत्य, कमप्यनवलोक्य, पुनर्निवृत्य, "मन्ये मार्जारः कोऽपि" इति मन्दं गुरवे निवेद्य, पुनस्तथैवोपविवेश। मुनिश्च 'मा स्म कश्चिदितरः श्रौषीदि'ति सशङ्कः क्षणं विरम्य पुनरुपन्यस्तुमारेभे—

धिष्ण्यां त्यकन्नासन्नारूढयोरि" त्युभयत्रापि त्यकन्। "उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यके" त्यमरः। निर्मक्षिके=मक्षिकाणामभावो निर्मक्षिकं तस्मिन्, एकान्ते। मानवसञ्चारदेशे सर्वत्र मक्षिकास्तिष्ठन्तीति तदभावेन जन-संचाराभावो लक्ष्यते। मा श्रौषीत्=मा आकर्णयतु। उपन्यस्तुम्=

तपस्या करने के लिए चले गये।

तदुपरान्त जब अपरिचित लोग धीरे-धीरे चले गये और एकदम निर्जन हो गया, गोरे ब्रह्मचारी को बुला कर ज्योंही मुनिजी ने बीजापुर के अधिपति की आज्ञा से वीर शिवाजी के साथ लड़ने के लिए सेना के साथ कूच कर चुके अफ़जल ख़ाँ के विषय में कुछ पूछना चाहा, त्योंहीं उन्हें किसी के पैरों की आहट-सी सुनाई दी। उसको सुनकर मुनि के अन्यमनस्क से (दुचित्त-से) होने पर गोरा ब्रह्मचारी भी उसी ध्वनि से कर्णाकृष्ट-सा उठकर चारों ओर भली भाँति देखकर, टहल कर, बार बार "कौन है" कहकर किसी को न देख फिर लौट आकर "मालूम होता है कोई बिल्ली है" धीरे गुरुजी से निवेदन कर फिर वैसे ही बैठ गया। मुनि जी ने भी कोई दूसरा न सुन ले इस आशङ्का से क्षण भर चुप रहकर फिर कहना आरंभ किया—

"वत्स गौरसिंह ! अहमत्यन्तं तुष्यामि त्वयि, यत्त्वमेकाकी अपजलखानस्य त्रीनश्वान् तेन दासीकृतान् पञ्च ब्राह्मणतनयांश्च मोचयित्वा आनीतवानसीति। कथं न भवेरीदृशः? कुलमेवेदृशं राजपुत्रदेशीयक्षत्रियाणाम्"। तावत् पुनरश्रूयत मर्मरः पादक्षेपश्च। ततो विरम्य, मुनिः स्वयमुत्थाय, प्रोच्चं शिलापीठमेकमारुह्य, निपुणतया परितः पश्यन्नपि कारणं किमपि नावलोकयामास चरणाक्षेपशब्दस्य। अथ पुनरेकतानेन निपुणं निरीक्षमाणेन गौरसिंहेन दृष्टं, यत् कुटीर-निकटस्थ-निष्कुटक-कदलीकूटे द्वित्रास्तरवोऽतितरां कम्पन्ते इति। तदेव संशयस्थानमित्यङ्गुल्या निर्दिश्य, कुटीर-बलीके गोपयित्वा स्थापितानामसीनामेकमाकृष्य, रिक्त-

---

कथयितुम्। राजपुत्रदेशः=राजपुत्रशब्दापभ्रंशीभूतो लोके सम्प्रति "राजपूताना" इति प्रसिद्धशब्दव्यपदेश्यो देशः। मर्मरः=शुष्कपर्णध्वनिः। "अथ मर्मरः। स्वनिते वस्त्रपर्णानामि" त्यमरः। एकतानेन=एकचित्तेन। निष्कुटा एव निष्कुटकाः=गृहारामाः, "गृहारामास्तु निष्कुटा" इत्यमरः। तत्र तिष्ठतीति कुटीरनिकटस्थाश्च ते गृहारामास्तेषु, कदलीनाम्=रम्भाणाम् कूटे=समूहे। वलीके=पटले। "वलीकनीध्रे पटलप्रान्त" इत्यमरः।"छप्पर की ओरी" इति हिन्दी।

---

"बेटा गौरसिंह, मैं तुम्हारे ऊपर अत्यन्त प्रसन्न हूँ, तुम अकेले अफ़जल खाँ के तीन घोड़े और उसके द्वारा दास बनाये गये पाँच ब्राह्मण बालकों को छुड़ा कर ले आये। क्यों न तुम ऐसे होगे, राजपुताने के क्षत्रियों का कुल ही ऐसा है।" फिर मर्मर शब्द और पैरों की आहट सुनाई दी। बोलना बन्द कर, स्वयं उठकर, एक ऊँची शिला पर चढ़कर चारों ओर भली भाँति देख-भाल कर भी मुनि को पैरों की आहट का कुछ भी कारण नहीं दिखाई दिया। तदनन्तर फिर एकाग्रचित्त से ध्यानपूर्वक देख रहे गौरसिंह ने देखा कि कुटी के निकट की गृहवाटिका के केले के झुरमुट में दो तीन पेड़ बहुत अधिक हिल रहे हैं। वही सन्देह का स्थान है, यों अंगुली से इशारा कर छप्पर की ओरी पर छिपाकर रक्खी हुई तलवारों में से एक खींच कर गौरसिंह चला, मुनिजी

हस्तेनैव मुनिना पृष्ठतोऽनुगम्यमानः कपोल-तल-विलम्बमानान् चक्षुश्चुम्बिनः कुटिल-कचान् वामकराङ्गुलिभिरपसारयन्, मुनि-वेषोऽपि किञ्चित्कोप-कषायित-नयनः, कर कम्पित-कृपा-कृपण-कृपाणो महादेवमारिराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररस-द्वयस्नातः सपदि समागतवान् तन्निकटे, अपश्यच्च लता-प्रतान-वितान-वेष्टित-रम्भा-स्तम्भ-त्रितयस्य मध्ये नीलवस्त्र-खण्ड-वेष्टित-मूर्द्धानं, हरित-कञ्चुकं, श्याम-वसनानद्ध-कटितट-कर्बुरा-

रिक्तहस्तेन = शून्यकरेण। कपोलतलविलम्बमानान् = गण्ड-संलग्नान्। किञ्चित्कोपेन = ईषत्क्रोधेन, कषायिते = कलुषिते, नयने = नेत्रे, यस्य सः। करे कम्पितः कृपाकृपणः = दयाशून्यः, कृपाणः = असिर्यस्य सः। आरिराधयिषुः = सेवितुमिच्छुः। शङ्करसमाराधनाय करकलितचापो मध्यमपाण्डवस्तपश्चचारेति महाभारतीया कथा किरातार्जुनीयमहाकाव्यमूल-भूता। पूर्णोपमा। लतानाम् = वल्लीनाम्, "वल्ली तु व्रततिर्लते" त्यमरः, प्रतानानि = सूक्ष्मतन्तवस्तेषां, वितानम् = विस्तारः, तेन वेष्टितम् = वल-यितम्, रम्भास्तम्भानां त्रितयम् = कदलीस्तम्भत्रयं, तस्य। यवनयुवकम-पश्यदित्यन्वयः। तमेव विशिनष्टि। नील्या रक्तं नीलं, तच्च वस्त्रखण्डम्, तेन वेष्टितो मूर्धा यस्य तम्। हरितः = हरिद्वर्णः, कञ्चुकः = चोलको यस्य तम्। "अङ्गरखा, चोंगा" इति हिन्दी। श्यामवसनेन = कृष्णवस्त्रेण, "वस्त्रमाच्छादने वासश्चैलं वसनमंशुकमि" त्यमरः, आनद्धम् = आच्छा-दितम्, कटितटे कर्बुरम् = अनेकवर्णम्, "चित्रं किर्मीर-कल्माषशबलै-

भी खाली हाथ उसके पीछे हो लिये, वह गालों पर लटक रहे नेत्रों को छू रहे घुंघराले केशों को बाँये हाथ की अंगुलियों से हटाता जा रहा था, यद्यपि उसकी वेष-भूषा तपस्वी की-सी थी, तो भी तनिक क्रोध से उसके नेत्र कुछ अरुण हो गये थे, ( दाहिने ) हाथ में तलवार लपलपा रही थी, अतएव महादेवजी की आराधना करने की इच्छावाले तपस्विवेषधारी अर्जुन के समान शान्त और वीर दोनों रसों से सराबोर वह तुरन्त उसके निकट आ पहुँचा और उसने लताओं की बेलों के संघात से वेष्टित तीन केले के पेड़ों के बीच में नीले कपड़े के टुकड़े को सिर पर लपेटे हुए, हरा लबादा पहने, कमर में काला

धोवसनं, काकासनेनोपविष्टं, रम्भालवाल-लग्नाधोमुख-खड्गत्सरु-न्यस्त-विपर्य्यस्त-हस्त-युगलम्, लशुनगन्धिभिर्निश्वासैः कदली-किसलयानि मलिनयन्तम्, नवाङ्कुरित-श्मश्रु-श्रेणि-च्छलेन कन्य-कापहरणपङ्क-कलङ्कपङ्क-कलङ्किताननम्, विंशतिवर्ष-कल्पं यव-

---

ताश्च कर्बुर" इत्यमरः, अधोवसनम् = नाभ्यूरुजङ्घाच्छादनम्, "तहमत, लुङ्गी" इति हिन्दी, यस्य तम्। काकासनेन = चिबुकार्पितजानुयुगलासनेन। रम्भाया आलवाले = आवापे, "स्यादालवालमावाप" इत्यमरः, वृक्षादिमूले समन्ततोऽम्भसां धारणार्थं वेष्टनमालवालम्, "ओटा" इति हिन्दी, अधोमुखस्य = निम्नाननस्य, खड्गस्य त्सरौ = मुष्टौ, "तलवार की मूठ" इति हिन्दी, "त्सरुः खड्गादिमुष्टौ स्यादि" त्यमरः, विशिष्टवाचकानां शब्दानां सति विशेषणे विशेष्यमात्रपरत्वमित्यभियुक्ताभ्युपगमात्प्रकृतेऽधिकपददोषशङ्कानवकाशः। न्यस्तम् = स्थापितम्, विपर्यस्तम् = न्युब्जीभूतम्, हस्तयुगलम् = करद्वयं यस्य तम्। लशुनस्य गन्ध इव गन्धो येषां तैः, किसलयानि नवपल्लवानि। नवाङ्कुरितायाः = नवस्फुरितायाः, श्मश्रुश्रेण्याः छलेन = कन्यकाया अपहरणरूपं यत् पङ्कम् = पापम्, "अस्त्री पङ्कं पुमान् पाप्मे" त्यमरः, तस्य यः कलङ्कः = दुर्यशः। स एव पङ्कः = कर्दमः, "पङ्कोऽस्त्री शादकर्दमावि" त्यमरः, तेन कलङ्कितम् = भ्रष्टम्, आननं यस्य तम्। मुखसमुद्भूतश्मश्रूणां कलङ्कपङ्कत्वेनोत्प्रेक्षा। विंशतिवर्षकल्पम् = प्रायो विंशतिवर्षव-

---

कपड़ा लपेटे, चितकबरे रङ्ग की लुङ्गी पहने, सिकुड़ कर ( घुटने के बीच में ठोड़ी डाल कर ) बैठे हुए केले के थाले पर अधोमुख लटक रही तलवार की मूठ पर दोनों हाथ उलटे रक्खे हुए, लहसुन की दुर्गन्ध से भरे सांसों से केले के कोमल पत्तों को मलिन ( म्लान ) कर रहे, जरा जरा उठी हुई मूछ-दाढ़ी की रेखा के बहाने कन्या के अपहरणरूपी पाप कर्म से उत्पन्न दुष्कीर्ति रूपी कीचड़ से कलङ्कित मुखवाले लगभग २०

नयुवकम्। ततः परस्परं चाक्षुषे सम्पन्ने दृष्टोऽहमिति निश्चित्य, उत्प्लुत्य, कोशात् कृपाणमाकृष्य, युयुत्सुः सोऽपि सम्मुखमवतस्थे। ततस्तयोरेवं संजाताः परस्परमालापाः।

गौरसिंहः—कुतो रे यवन-कुल-कलङ्क !

यवनयुवकः—आः ! वयमपि कुत इति प्रष्टव्याः ? भारतीय-कन्दरिकन्दरेष्वपि वयं विचरामः, शृङ्ग-लाङ्गूल-विहीनानां हिन्दु-पद-व्यवहार्याणाञ्च युष्मादृक्षाणां पशूनामाखेटक्रीडया रमामहे।

गौरसिंहः—[ सक्रोधं विहस्य ] वयमपि तु स्वाङ्कागतसत्त्व-वृत्तयः शिवस्य गणा अत्रैव निवसामः, तत्सुप्रभातमद्य, स्वयमेव

---

यस्कम्। चाक्षुषे = चक्षुरिन्द्रियजन्यप्रत्यक्षे। उत्प्लुत्य = उत्पत्य। "कूदकर" इति हिन्दी। युयुत्सुः = योद्धुमिच्छुः। अवतस्थे = स्थितः, "समवप्रविभ्यः स्थ" इत्यात्मनेपदम्। भारतीयाः=भारतभवाः, ये कन्दरिणः=शैलास्तेषां कन्दरेषु। आखेटक्रीडया = मृगयाखेलया।

स्वाङ्के आगताः सत्त्वाः = प्राणिन एव वृत्तयः = जीवन-

---

वर्ष के एक यवन युवक को देखा। तत्पश्चात् परस्पर चार चश्म होने पर मैं देख लिया गया हूँ यह जानकर झुरमुट से कूद कर म्यान से तलवार खींच कर लड़ने को उतारू होकर वह भी सामने खड़ा हो गया। तदुपरान्त उन दोनों की आपस में यों बातचीत हुई—

गौरसिंह—अरे ! यवन-कुलकलङ्क, यहां कहां से आया ?

यवन-युवक—ओह ! क्या हमसे भी कहाँ से पूछना उचित है ? भारत-वर्षीय पर्वतों की गुफाओं में भी हम लोग विचरते हैं, बिना सींग और पूछ के हिन्दू नामधारी तुम्हारे ऐसे पशुओं का शिकार कर आनन्द मनाते हैं।

गौरसिंह—( क्रोध के साथ हँसकर ) समीप में आये हुए प्राणियों से जीवन निर्वाह करनेवाले शिव के गण रूप हम लोग भी तो यहीं निवास करते हैं। आज प्रातःकाल किसी अच्छे का मुंह देखा, ( या अंग्रेजोंका Good morning रूप अभिवादन है ) इसी से स्वयं ही वनाग्नि की

त्वं दीर्घ-दावदहने पतङ्गायितोऽसि ।

यवनयुवकः—अरे रे वाचाल ! ह्यो रात्रौ युष्मत्कुटीरे रुदतीं समायातां ब्राह्मण-तनयां सपदि प्रयच्छत, तत्कदाचिद्दयया जीवतोऽपि त्यजेयम् , अन्यथा मदसिभुजङ्गिन्या दष्टाः क्षणात् कथावशेषाः संवत्स्यथ ।

कलकलमेतमाकर्ण्य श्यामबटुरपि कन्यासमीपादुत्थाय दृष्ट्वा च हन्तुमेतं यवनवराकं पर्य्याप्तोऽयं गौरसिंह इति मा स्म गमदन्योऽपि कश्चित् कन्यकामपजिहीर्षुरिति वलीकादेकं विकटखड्गमाकृष्य त्सरौ गृहीत्वा कन्यकां रक्षन् , तदध्युषित-कुटीर-निकट एव तस्थौ ।

---

साधनानि, येषां ते । दीर्घश्चासौ दावदहनः=वनाग्निस्तस्मिन् । "दवदावौ वनानल" इत्यमरः । जीवतः, शसो रूपमिदम्—युष्मानित्यध्याह्रियमाण-विशेष्यस्य विशेषणम् । मदसिरेव भुजङ्गिनी=सर्पिणी, तया । रूपकम् । संवत्स्यथ, "वृद्भ्यः स्यसनोरि" ति परस्मैपदम्, "न वृद्भ्यश्चतुर्भ्य" इतीण्निषेधः ।

कलकलम्=कोलाहलम् । वलीकात्=पटलप्रान्तात् , तया=कन्यकया, अध्युषितस्य=सेवितस्य, कुटीरस्य निकटे तस्थौ=स्थितः ।

---

धधकती ज्वालाओं में शलभ बन गये हो ।

यवन-युवक—अरे बकवादी, कल रात तुम्हारी कुटी में रोते रोते आई हुई ब्राह्मणबालिका तुरन्त मेरे हवाले कर दो, तो शायद दयावश जीता छोड़ दूँ, नहीं तो मेरी तलवार रूपी सर्पिणी से डँसे गये तुम लोगों का केवल वृत्तान्त ही शेष रह जायगा ।

इस कोलाहल को सुनकर साँवला ब्रह्मचारी भी कन्या के समीप से उठकर और बेचारे मियाँ का काम तमाम करने के लिए यह गौरसिंह पर्याप्त है यह जानकर शायद कन्या को हरने के लिए कोई दूसरा यहाँ न आ जाय इस आशङ्का से छप्पर के कोने से एक तीखी तलवार खींच कर उसका मुट्ठा पकड़ कर कन्या की रक्षा करता हुआ, जिस कुटी में कन्या बैठी थी, उसके निकट ही खड़ा रहा ।

गौरसिंहस्तु "कुटीरान्तः कन्यकाऽस्ति, सा च यवन-वध-व्यसनिनि मयि जीवति न शक्या द्रष्टुमपि, किं नाम स्प्रष्टुम् ? तद् यावत्तव कवोष्ण-शोणित-तृषित एष चन्द्रहासो न चलति, तावत् कूर्दनं वा, उत्फालं वा यच्चिकीर्षसि तद्विधेहि" इत्युक्त्वा व्यालीढमर्य्यादया सज्जः समतिष्ठत ।

(ततो गौरसिंहो दक्षिणान् वामांश्च परश्शतान् कृपाणमार्गानङ्गीकृतवतः, दिनकर-कर-स्पर्श-चतुर्गुणीकृत-चाकचक्यैश्चञ्चच्चन्द्रहासचमत्कारैश्चक्षूंषि मुष्णतः, यवन-युवक-हतकस्य, केनाप्यनुप-

यवनानां वध एव व्यसनं यस्य तादृशे । कवोष्णस्य = ईषदुष्णस्य, "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वती"त्यमरः, शोणितस्य = लोहितस्य, तृषितः = पिपासितः । चन्द्रहासः = खड्गः, "खड्गेतु निस्त्रिंशचन्द्रहासासिरिष्टय"इत्यमरः । कूर्दनं वा उत्फालं वा = "कूदना, उछलना" इति हिन्दी । व्यालीढम् = युद्धावस्थानविशेषः, तन्मर्यादया । कोदण्डमण्डनादिषु प्रसिद्धमिदम् । "पैंतरा" इति हिन्दी ।

दिनकरकराणाम् = सूर्यकिरणानाम्, स्पर्शेन, चतुर्गुणीकृतम् = वर्धितम्, चाकचक्यम् = प्रतिभासविशेषो यैस्तैः । चञ्चच्चन्द्रहासचमत्कारैः = सञ्चरत्खड्गचमत्कारैः । मुष्णतः = चोरयतः । हतकस्य = दुष्टस्य । केनापीत्यनुपलक्षितविशेषणम् । "सविशेषणानां वृत्तिर्ने"ति तु न

गौरसिंह तो "कुटीर के अन्दर कन्या है, तुर्कों की हत्या का व्यसनी (शौकीन) मैं जब तक जीवित हूँ उसे कोई देख भी नहीं सकता; छूना तो दूर रहा ? जब तक तुम्हारे गरम खून का प्यासा यह खड्ग नहीं चलता तब तक जो चाहो उछल कूद मचा लो ।" यह कह कर पैंतरा जमा कर वार करने के लिए तैयार हो गया ।

मियाँ ने तलवार के दाँये बाँये हजारों पैंतरे दिखाये, सूर्य-किरणों के सम्पर्क से चौगुनी चमकवाली चल रही तलवार की चमचमाहट से आँखों को चौंधिया रहे दुष्ट यवन का श्रमवश निकले हुए पसीने से तर, अस्तव्यस्त

लक्षितोद्योगः, अकस्मादेव स्वासिना कलित-क्लेद-संजात-स्वेद-जल-जालं विशिथिल-कच-कुल-मालं भग्न-भ्रू-भयानक-भालं शिरश्चिच्छेद ।)

अथ मुनिरपि दाडिम-कुसुमास्तरणाच्छन्नायामिव गाढ-रुधिर-दिग्धायां ज्वलदङ्गाररचितायां चितायामिव वसुधायां शयानं वियु-

---

नित्यसापेक्षस्थल इति सुव्यक्तमेव । स्वासिना शिरश्चिच्छेदेत्यन्वयः । शिरो विशिनष्टि—कलितेन = व्याप्तेन, क्लेदेन = श्रमेण, सञ्जातस्य = उत्पन्नस्य, स्वेदजलस्य = घर्मजलस्य, "घर्मो निदाघः स्वेद" इत्यमरः, जालम् = समूहो यस्मिंस्तत् । विशिथिला = इतस्ततः परिभ्रष्टा, कचानाम् = केशानाम्, कुलस्य = समूहस्य, माला = पङ्क्तिः, यस्मिंस्तत् । भग्नया = छिन्नया, भ्रुवा = दृगूर्ध्वभागेन, "ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियावि" त्यमरः, भयानकम् = भीषणम्, भालम् = ललाटम्, यस्मिंस्तत् । जालम् मालम् भालमित्यत्र यमकम् ।

वसुधायाम् = पृथिव्याम् । शयानम् = पतितम् । वसुधां विशिनष्टि-गाढेन = घनीभूतेन, रुधिरेण = लोहितेन, दिग्धायाम् = लिप्तायाम् । "दिग्धो विषाक्तबाणे स्यात्पुंसि लिप्तेऽन्यलिङ्गक" इति मेदिनी । उत्प्रेक्षते-दाडिमस्य = करकस्य, "दाडिमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिष्वि"ति मेदिनी, कुसुमानाम्, आस्तरणेन = विष्टरेण, आच्छान्नायामिव । पुनरप्युत्प्रेक्षते-ज्वलदङ्गारैः, चितायाम् = व्याप्तायाम् । चितायाम् = चितौ, "चिता चित्या चितिः स्त्रियामि" त्यमरः । भस्मीभवनाय न यावनैश्चिता प्राप्यते । हिन्दुकरेण मृत्युमवाप्य कियतः कालस्य कृते सा

---

केशराशिवाला, टेढ़ी भौंहों से भयानक कपालवाला सिर गौरसिंह ने एक बारगी ऐसी सफाई से काट डाला कि कोई भी उसका हस्तलाघव देख न पाया । तत्पश्चात् मुनिजी दाड़िम के फूलों की सेज से आच्छन्न-सी, मानो जल रहे अंगारों से रची गई चिता-सी, गाढ़े खून से लथ-

ज्यमान-भारतभुवमालिङ्गन्तमिव निर्जीवीभवदङ्ग-बन्ध-चालन-परं शोणित-सङ्घात-व्याजेनान्तः-स्थित-रजोराशिमिवोद्गिरन्तं कलित-सायन्तन-घनाऽऽडम्बर-विभ्रमं सतत-ताम्रचूड-भक्षण-पातकेनेव ताम्रीकृतं छिन्न-कन्धरं यवनहतकमवलोक्य सहर्षं ससाधुवादं सरोमोद्गमञ्च गौरसिंहमाश्लिष्य, भ्रूभङ्गमात्राऽऽज्ञप्तेन भृत्येन मृतक-

---

लब्धाऽनेनेति ध्वनिः। चिन्ताचितयोर्दाहकत्वपर्यालोचनापरमिदं पद्यमनुभवपथपथिकम्—"चिन्ताचिताद्वयोर्मध्ये बिन्दुमात्रं विशेषकम्। सजीवं दहते चिन्ता निर्जीवं दहते चिता॥" यवनहतकं विशिनष्टि—निर्जीवीभवताम् = निष्प्राणतां गच्छताम्, अङ्गबन्धानाम् = शरीरसन्धीनाम्, चालने, परम् = निरतम्। शोणितसङ्घातव्याजेन = रुधिरप्रवाहच्छलेन। अन्तः स्थितो यो रजोराशिः = रजोगुणसमूहः, तमिवेत्युत्प्रेक्षा। उद्गिरन्तम् = वमन्तम्। कलितः = धारितः, सायन्तनस्य = सायंभवस्य, घनाऽऽडम्बरस्य = मेघविडम्बनायाः, विभ्रमः = विलासो येन तम्। सततम् = सर्वदा, यत् ताम्रचूडस्य = कुक्कुटस्य, "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुध" इत्यमरः, भक्षणम् = अशनम्, तदेव पातकम् = पापं तेनेव। ताम्रीकृतम् = रक्तीकृतम्। छिन्नकन्धरम् = कृत्तग्रीवम्। सायङ्कालिकसूर्य-

---

पथ पृथिवी पर सो रहे, मानो बिछुड़ रही भारत-भूमि का आलिङ्गन कर रहे, निर्जीव हो रही अङ्ग-सन्धियों को छटपटा रहे, रुधिर-राशि के बहाने मानो अन्दर जमे हुए रजोगुण को उगल रहे, सायंकाल के मेघ के शोभातिशय को धारण कर रहे, निरन्तर मुर्गों के भक्षण के पाप से मानो लाल किये गये दुष्ट मियाँ की गरदन कटी देखकर बड़े हर्ष, शाबाशी ( वाहवाही ) और पुलकावलियों के साथ गौरसिंह का आलिंगन कर, नेत्रों के इशारे से आज्ञप्त भृत्य द्वारा मृतक के चोगे, कमरबन्द और

कञ्चुक-कटिबन्धोष्णीषादिकमन्विष्याऽऽनीतं पत्रमेकमादाय सगणः स्वकुटीरं प्रविवेश ।

*इति प्रथमो निश्वासः ।*



---

इव संजातमिति यावत् । कटिबन्धः = जघनपट्टिका "पेटी" इति हिन्दी । उष्णीषम् = शिरोवेष्टनम् ।

निश्वास इति, वाक्यविन्यासरूपे गद्यकाव्ये निश्वासप्रश्वासा एव परिच्छेदका भवन्तीति परिच्छेदकानामङ्कसर्गाध्यायादिसंज्ञाः समुपेक्ष्य निश्वाससंज्ञामेवादरयाञ्चकार ग्रन्थकारः । यद्यपि बाणादिभिरुच्छ्वाससंज्ञा गृहीता, किन्तु सा शोकक्रोधादावेवापेक्षितेति तामपि तत्याज । भवति चात्र प्राचीनं पद्यम्—"प्रौढिप्रकर्षेण पुराणरीति-व्यतिक्रमः श्लाघ्यतमः कवीनाम्" इति ग्रन्थकृच्छिष्यकृता टिप्पणी ।

*इति शिवराजविजयवैजयन्त्या प्रथमनिश्वासविवरणम् ।*



---

पगड़ी की तलाशी लेकर लाये गये एक पत्र को लेकर दलबल के साथ अपनी कुटी में प्रविष्ट हुए ।

इति ।

"रात्रिर्गमिष्यति भविष्यति सुप्रभातम्
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त! हन्त!! नलिनीं गज उज्जहार॥"

स्फुटम्।

---

कपटपटुरपजलखानः शिवं निग्रहीतुं कीर्त्तिमर्जयितुञ्च विहितविविधमनोरथः श्रीमता शिवेनैव निगृहीतो मृत्युवशगः कृतश्चेति द्वितीयनिश्वासकथाभागोपक्षेपायाऽऽदौ "रात्रिर्गमिष्यती"ति पद्यं समुल्लिखति। व्याख्या चास्य नितान्तसरला। द्विरेफपदञ्च द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या रेफद्वयवत्त्वेन भ्रमरपदोपस्थापनद्वारा मधुकरवाचकम्, योगरूढञ्चेति नेतरतादृशशब्दसङ्ग्रहानुचिन्ता। भवति चात्र कोशः—"द्विरेफपुष्पलिड्भृङ्ग-षट्पद-भ्रमरालय" इति। परे तु तेनैव धर्मेण लाक्षणिकं मन्यन्ते, तेषां निरूढिरेव कारणत्वेनाभिप्रेता। अद्यतनानद्यतनोभयविधभविष्यत्स्थले लुट्प्रयोगस्यैवेष्टव्यत्वेऽपि पूर्वं विशेषाविवक्षायां लृटि ततो विशेषणान्वेषणमिति स्थलेऽत्रीदृशेषु नासाधुत्वविषयकभ्रान्तिरवलम्बनीयेति शम्। अपजलखानः प्रताप-

---

॥ श्रीः ॥

## द्वितीय निश्वास

कमल-कली के अन्दर बैठा हुआ भौंरा, 'रात बीतेगी, सुहावना प्रभात होगा, कमल की शोभा खिलेगी'—यों मनसूबे बांध रहा था, परन्तु खेद! महाखेद!! कमल को हाथी तोड़ ले गया। (बेचारे भौंरे की सब आशाओं पर पानी फिर गया)।

इतस्तु स्वतन्त्र–यवनकुल–भुज्यमान–विजयपुराधीश–प्रेषितः पुण्यनगरस्य समीपे एव प्रक्षालित–गण्डशैल–मण्डलायाः, निर्झर-वारिधारा-पूर-पूरित-प्रबल-प्रवाहायाः, पश्चिम-पारावार-प्रान्त-प्रसूत-गिरि-ग्राम-गुहा-गर्भ-निर्गताया अपि प्राच्य-पयोनिधि-

---

दुर्गादविदूर एव तिष्ठति स्मेति सम्बन्धः। अपजलखानं विशिनष्टि-स्वतन्त्रम् = स्वच्छन्दम्, यद् यवनकुलं तेन भुज्यमानस्य = शास्यमानस्य, विजयपुरस्य = तन्नामकनगरस्य, अधीश्वरेण, प्रेषितः = प्रहितः। इदं तात्कालिकस्थितिप्रदर्शनमात्रफलकन्न तु साहित्यिकविवेचनया समुपयोगि विशेषणमिति वेदितव्यम्।

भीमाया नीरं कटूकुर्वन्निति सम्बन्धः। नदीं विशिनष्टि-प्रक्षालितानि = धौतानि, गण्डशैलानाम् = गिरिच्युतस्थूलशिलानाम्, मण्डलानि यया तस्याः। निर्झराणाम् = जलनिर्गमस्रोतसाम्, वारिधारापूरैः = जलधारासमूहैः, पूरितः = भरितः, प्रबलः = वेगवान्, प्रवाहो यस्यास्तस्याः। पश्चिमश्चासौ पारावारः = समुद्रः, "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिरि" त्यमरः, तस्य, प्रान्ते = निकटप्रदेशे, यो गिरीणां ग्रामः = समूहः, तस्य गुहाः = गह्वराणि, तासां गर्भतः = मध्यात्, निर्गतायाः = समुत्पन्नायाः। प्राच्यः = प्राचीभवः, यः पयोनिधिः, तच्चुम्बने

---

इधर बीजापुर के अधिपति का अन्यतम सेनापति अफ़ज़ल खाँ प्रताप-दुर्ग के निकट ही वीर शिवाजी के साथ युद्धरूपी जुआ खेलने की इच्छा से सेना के साथ पड़ाव डाले बैठा था। अफ़ज़ल खाँ को बीजापुर के नरेश ने जो स्वतन्त्र यवन-साम्राज्य के अधीन थे, भेजा था। वह पूना के समीप में ही पर्वतों से गिरे हुए बड़े बड़े पत्थरों की राशि को धोनेवाली, झरनों की जलधाराओं से पूर्ण प्रबल प्रवाहवाली, पश्चिम सागर के तटवर्ती पर्वत श्रेणियों की गुफाओं से निकली हुई और पूर्व

चुम्बन-चञ्चुरायाः रिङ्गत्-तरङ्ग-भङ्गोद्भूतावर्त्त-शत-भीमायाः, भीमाया नद्याः, अनवरत-निपतद्बकुल-कुल-कुसुम-कदम्ब-सुरभीकृतमपि नीरं वगाहमान-मत्त-मतङ्गज-मद-धाराभिः कटू-कुर्वन्; हय-हेषा-ध्वनि-प्रतिध्वनि-बधिरीकृत-गव्यूति-मध्यगाध्वनीन-

चञ्चुरायाः = चपलायाः । पश्चिमसमुद्रान्निःसृत्य पूर्वसमुद्रं प्रविष्टाया इति वाच्योऽर्थः । एवमुक्तिः पाश्चात्यरमणीनां प्राच्यसंपर्करूपसाम्प्रतिकव्यवहारोपहासाय । रिङ्गताम् = सञ्चलताम्, तरङ्गाणाम् = ऊर्मीणाम्, भङ्गैः = छेदैः, उद्भूताः = उत्पन्नाः, ये आवर्ताः = अम्भसां भ्रमाः, तैः भीमायाः = भयदायिन्याः । "घोरं भीमं भयानकमि" त्यमरः । भीमायाः = "भीमा" नामवत्याः । अनवरतम् = सततम्, निपतताम् = प्रच्यवताम्, बकुलकुल-कुसुमानाम्=वञ्जुल-समूह-सुमानाम्, कदम्बेन=समूहेन, सुरभीकृतम् = सुगन्धितामापादितम् । वगाहमानानाम् = प्रविशताम्, जलक्रीडां कुर्वतामिति भावः, "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरि" त्यल्लोपः, मत्तानाम् = दानभरितानाम्, मतङ्गजानाम् = करिणाम्, मदधाराभिः = दानजलैः । कटूकरणे हेतुः । हयानाम् = अश्वानाम्, हेषा = ध्वनिः, यद्यपि हेषा-शब्दोऽश्वशब्दे, "अश्वानां हेषा ह्रेषा च निःस्वनः" इत्यमरात्तथा चाश्वशब्दोच्चारणमनपेक्षितम्, तथापि विशिष्टवाचकपदानां सति विशेषणवाचक-पदान्तर-प्रयोगे विशेष्यमात्रपरत्वस्य "सकीचकैर्मारुतपूर्णरन्ध्रैरि" त्यादिषु दृष्टत्वेन केवलनिःस्वनवाचकत्वेन नाश्वशब्दवैयर्थ्यं मति वेदितव्यम् ।

तद्ध्वनिप्रतिध्वनिभिः, बधिरीकृतः = श्रुतिसामर्थ्यविकलीकृतः, गव्यूतिमध्यगः = क्रोशद्वयान्तरालवर्त्ती, "गव्यूतिः स्त्री क्रोशयुगमि" त्यमरः,

सागर को चूमने के लिए उतावली (पूर्व सागर में गिरनेवाली) एवं फैल रही अनन्त लहरियों के टूटने से पैदा हुए सैकड़ों भँवरों से भीषण भीमा नदी के जल को, जो निरन्तर गिर रही मौलसिरी की पुष्पराशि से पहले से सुगन्धित था, जलक्रीड़ा कर रहे मदोन्मत्त मातङ्गों की मदधाराओं से और भी तीक्ष्ण गन्धवाला कर रहा था, घोड़ों के हिनहिनाने की ध्वनि की प्रतिध्वनि से दो कोस के अन्दर चलनेवाले

वर्गः, पट-कुटीर-कूट-विहित-शारदाम्भोधर-विडम्बनः, निरपराध-भारताभिजन-जन-पीडन-पातक-पटलैरिव समुद्धूयमान-नीलध्वजै-रुपलक्षितः, विजयपुरेश्वरस्यान्यतमः सेनानीः अपजलखानः प्रताप-दुर्गादविदूर एव शिववीरेण सहाऽऽहवद्यूतेन चिक्रीडिषुः ससेनस्ति-ष्ठति स्म।

अथ जगतः प्रभाजालमाकृष्य, कमलानि सम्मुद्रय, कोकान् सशोकीकृत्य, सकल-चराचर-चक्षुःसञ्चार-शक्तिं शिथिलीकृत्य,

---

अध्वनीनवर्गः = पथिकसमूहो येन सः। पटकुटीराणाम् = उपकारि-काणाम्, "उपकार्योपकारिके" त्यमरः, कूटैः = समूहैः, विहिता, शार-दाम्भोधराणाम् = शरन्मेघानाम्, निर्जलत्वेन श्वेतवर्णानामिति तात्पर्यम्, बिडम्बना = अनुकृतिर्येन सः। समुद्धूयमानैः = कम्पमानैः, नीलध्वजैः = नीलपताकाभिः, उपलक्षितः = युक्तः। उत्प्रेक्षते—निरपराधानाम् = निर्दोषाणाम्, भारताभिजनानाम् = भारतीयानाम्। यत्र पूर्वैरुषितं तदभिजनात्मनाऽऽख्यायते। तिष्ठति स्म = अतिष्ठत्। 'लट् स्म' इति स्मयोगे लट्। अन्यतमः = अनेकेष्वेकः। आहवद्यूतेन = युद्धक्रीडया।

अथ भगवान् भास्वान् चक्षुषामगोचर एव यात इति सम्बन्धः। जगतः = संसारस्य। प्रभाजालम् = दीप्तिसमूहम्। आकृष्य = आकुञ्च्य। सम्मुद्रय = सङ्कोच्य। कोकान् = चक्रवाकान्। "कोकश्चक्रवाक" इत्यमरः। सशोकीकृत्य = दुःखिनो विधाय। दम्पत्योः परस्परं वियोगेन शोकः। सकलस्य, चराचरस्य = स्थावरजङ्गमात्मकस्य। चक्षुषाम् = नेत्राणाम्। सञ्चारस्य = कार्यकरणस्य, दर्शनस्येति यावत्, शक्तिम् = सामर्थ्यम्।

---

पथिकों को बहरा बना रहा था, खेमों के समूह से शरत् ऋतु के बादलों का उपहास कर रहा था और लहरा रही नीली पताकाओं से, जो निरपराध भारतीय जनता के उत्पीड़न से उत्पन्न मानो पापराशियाँ ही थीं, युक्त था।

जगत् की प्रकाश-राशि को खींच कर, कमलों को सिकोड़ कर, चक्रवाकों (चकवा-चकवी) को शोकमग्न कर, सम्पूर्ण चराचर जगत् की दर्शन-शक्ति

कुण्डलेनेव निज-मण्डलेन पश्चिमामाशां भूषयन्, वारुणी-सेवनेनेव माञ्जिष्ठ-मञ्जिम-रञ्जितः, अनवरत-भ्रमण-परिश्रम-श्रान्त इव सुषुप्सुः, म्लेच्छ-गण-दुराचार-दुःखाऽऽक्रान्त-वसुमती-वेदनामिव समुद्रशायिनि निविवेदयिषुः, वैदिक-धर्म-ध्वंस-दर्शन-संजात-

कुण्डलेन = कर्णभूषणेन । 'कुण्डलं कर्णभूषणमि' त्यमरः । पश्चिमा चासौ, आशा = काष्ठा, ताम् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता" इत्यमरः, वरुणस्येयं वारुणी = पश्चिमा दिग् मद्यञ्च, "सुरा प्रत्यक् च वारुणी" इत्यमरः । मञ्जिष्ठायाः = मण्डूकपर्ण्याः, "मजीठ" इति हिन्दी, अयं माञ्जिष्ठः, स चासौ मञ्जिमा = रक्तिमा, तेन रञ्जितः = रक्तः । यथा जनो वारुणी ( सुरा ) पानानन्तरं शोणवर्णो भवति तथा भास्करोऽपि वारुणी ( पश्चिमा ) संसर्गोत्तरं शोणः संजात इत्युत्प्रेक्षा । अनवरत-भ्रमण-परिश्रम-श्रान्तः = सततचलनखेदखिन्नः । सुषुप्सुः = स्वप्तुमिच्छुः । स्वाभाविकी चरमाचलप्राप्तिः खेदकारणकशयनेच्छावत्त्वेनोत्प्रेक्षिता । म्लेच्छगणस्य = यवनसमूहस्य, दुराचारैः = असदाचरणैः— गोहननमन्दिरध्वंसनादिभिः, दुःखाक्रान्तायाः = कष्टपीडितायाः, वसुमत्याः = पृथिव्याः, वेदनाम् = पीडाम् । समुद्रशायिनि = विष्णौ । निविवेदयिषुः = निवेदयितुमिच्छुः । स इवेत्युत्प्रेक्षा पत्नीक्लेशस्य पत्यावेव निवेदनीयत्वादिति भावः । वैदिकधर्मस्य = सनातनधर्मस्य, ध्वंसदर्शनेन = विनाशावलोकनेन, सञ्जातः =

को ढीली कर, कुण्डल-सदृश अपने मण्डल से पश्चिम दिशा को अलङ्कृत कर रहे भगवान भास्कर—जो वारुणी† ( पश्चिम दिशा और मदिरा ) के सेवन से मजीठ की-सी लालिमा से रक्त थे, निरन्तर भ्रमण के श्रम से मानो थक गये थे, अतः सोना चाहते थे, म्लेच्छों के दुराचारों से दुःखी धरा की पीड़ा को मानो भगवान् विष्णु से निवेदन करना चाहते थे, वैदिक धर्म का ह्रास देखने से मानो विरक्त हो गये थे, अतः दुर्गम

† वारुणी शब्द के दो अर्थ हैं - वरुण की दिशा ( पश्चिम दिशा ) और मदिरा मदिरा के सेवन में लोग रक्ताभ होते हैं। सूर्य की स्वाभाविक सान्ध्य रक्ताभा की वारुणीसेवनजन्यत्वेन उत्प्रेक्षा की गई है।

निर्वेद इव गिरिगह्नेषु प्रविश्य तपश्चिकीर्षुः, घर्म-ताप-तप्त इव समुद्रजले सिस्नासुः, सायं समयमवगत्य सन्ध्योपासनमिव विधित्सुः, "नास्ति कोऽपि मत्कुले; यः सकण्ठग्रहं धर्म-ध्वंसिनो यवनहतकान् यज्ञियादस्माद् भारत-गर्भान्निस्सारयेदिति" चिन्ताऽऽक्रान्त इव कन्दरि-कन्दरेषु प्रविविक्षुर्भगवान् भास्वान्, क्रमशः क्रूरकरानपहाय, दृश्य-परिपूर्ण-मण्डलः संवृत्य, श्वेतीभूय, पीतीभूय, रक्तीभूय च गगनधरातलाभ्यामुभयत आक्रम्यमाण इवाण्डाकृतिमङ्गीकृत्य, कलि-कौतुक-कवलीकृत-सदाचार-प्रचारस्य पातक-

---

समुत्पन्नः, निर्वेदः = वैराग्यं, यस्य स इव। गिरिगह्नेषु = पर्वतदुर्गमेषु। चिकीर्षुः = कर्त्तुमिच्छुः। सिस्नासुः = स्नातुमिच्छुः। सर्वो हि तप्तः स्नातुमिच्छति। अवगत्य = ज्ञात्वा। विधित्सुः = चिकीर्षुः। सकण्ठग्रहम् = कण्ठं गृहीत्वा। अर्धचन्द्रं दत्त्वेत्यर्थः। णमुलन्तम्। यज्ञियात् = यज्ञकरणयोग्यात्। "यज्ञर्त्विग्भ्यां घखञावि"ति घः। प्रविविक्षुः = प्रवेष्टुमिच्छुः। क्रूरकरान् = तीव्रकिरणान्। दृश्यम् = अवलोकयितुमर्हम्, सम्पूर्णम् = समस्तम्, मण्डलम् = बिम्बं, यस्य सः। श्वेतीभूयेत्यादि स्वभावोक्तिः। अण्डाकृतिम् = सूर्योऽण्डाकृतिरेवोदेत्यस्तमेति चेति तत्कालच्छटावलोकनेन प्रतीयते। अत्र सर्वत्रोत्प्रेक्षा। कलिकौतुकेन = कलियुगकौतूहलेन, कवलीकृतस्य = विनष्टस्य। पातकपुञ्जेन = अघौघेन, पिञ्ज-

---

पर्वतों में प्रवेश कर तपस्या करना चाहते थें, घाम की गरमी से मानों सन्तप्त हो गये थे, अतः समुद्र में स्नान करना चाहते थे, सायंकाल का समय जानकर मानो सन्ध्यावदन करना चाहते थे, 'मेरे कुल में ऐसा कोई नहीं है, जो धर्मध्वंसी दुष्ट यवनों को गर्दनियाँ देकर इस यज्ञार्ह भारतभूमि से निकाल बाहर करे'—यों मानों चिन्तित हो पर्वत की खोहों में प्रवेश करना चाहते थे—क्रमशः तीव्र किरणों का त्याग कर, अपने सारे बिम्ब को दर्शनयोग्य बना कर, पहले सफेद, फिर पीले और फिर लाल होकर, अन्तरिक्ष और पृथिवीतल दोनों ओर से दबाये जा रहे-से, अण्डाकार बन कर, कलियुग के प्रताप से छिन्न-भिन्न सदाचार

पुञ्ज-पिञ्जरित-धर्मस्य च यवन-गण-ग्रस्तस्य भारतवर्षस्य च स्मारयन्, अन्धतमसे च जगत् पातयन्, चक्षुषामगोचर एव संजातः।

ततः संवृत्ते किञ्चिदन्धकारे धूप-धूमेने व व्याप्तासु हरित्सु, भुशुण्डीं स्कन्धे निधाय निपुणं निरीक्षमाणः, आगत-प्रत्यागतञ्च विदधानः, प्रताप-दुर्ग-दौवारिकः, कस्यापि पादक्षेप-ध्वनिमिवाश्रौषीत्। ततः स्थिरीभूय पुरतः पश्यन् सत्यपि दीप-प्रकाशेऽवतमसवशादागन्तारं कमप्यनवलोकयन्, गम्भीरस्वरेणैवमवादीत्— "कः कोऽत्र भोः? कः कोऽत्र भोः?" इति।

---

रितस्य=पीतवर्णस्य। जर्जरीकृतस्येति भावः। धर्मस्य=सनातनधर्मस्य। भारतवर्षस्य—च स्मारयन्नित्यत्र "अधीगर्थदयेशामि"ति कर्मणि षष्ठी। अन्धतमसे=गाढध्वान्ते। "ध्वान्ते गाढेऽन्धतमसमि" त्यमरः। चक्षुषामगोचरः=अदृश्यः। सूर्यास्तमनवेलाऽभूदित्यर्थः।

हरित्सु=दिक्षु। भुशुण्डीम्=आयुधविशेषम्। "बन्दूक" इति हिन्दी। आगतप्रत्यागतम्=यातायातम्। विदधानः=कुर्वाणः। प्रतापदुर्गस्य=तन्नाम्ना ख्यातदुर्गस्य, "किला" इति हिन्दी, दौवारिकः=द्वारपालः। पादक्षेप-ध्वनिम्=चरणचङ्क्रमणशब्दम्। अवतमसम्=क्षीणध्वान्तम्, "अवसमन्धेभ्यस्तमस" इति सूत्रेण समासान्तोऽच्, तस्य, वशात्=सामर्थ्यात्।

---

के प्रचार की तथा पापराशि से पीले पड़े धर्म की यवनगणों से आक्रान्त भारतवर्ष को याद दिलाते, जगत् को गाढ़ अन्धकार में ढकेलते हुए नेत्रों से ओझल हो ही गये।

तदुपरान्त जब कुछ कुछ अंधेरा छा गया था, धूप के धुएँ से मानों दसों दिशाएँ आच्छन्न हो गईं थीं, बन्दूक कन्धे पर रखकर गौर से इधर-उधर देख रहे, गश्त लगा रहे, प्रताप-दुर्ग के प्रहरी (पहरेदार) को किसी के पैरों की आहट-सी सुनाई पड़ी। सुनते ही खड़ा होकर सामने देख रहे प्रहरी को, दीपक के रहते भी, अन्धकार के कारण आता हुआ कोई दिखाई न पड़ा। तब तो गरज कर उसने कहा—"अरे यहाँ यह कौन है, अरे यहाँ यह कौन है?"

अथ क्षणानन्तरं पुनः स एव पादध्वनिरश्रावीति भूयः साक्षेपमवोचत्—"क एष मामनुत्तरयन् मुमूर्षुः समायाति बधिरः ?"

ततो "दौवारिक ! शान्तो भव, किमति व्यर्थं मुमूर्षुरिति बधिर इति च वदसि ?" इति वक्तारमपश्यतैवाऽऽकर्णि मन्द्रस्वरमेदुरा वाणी। अथ "तत्किं नाज्ञायि अद्यापि भवता प्रभुवर्य्याणामादेशो यद् दौवारिकेण प्रहरिणा वा त्रिः पृष्टोऽपि प्रत्युत्तरमददद् हन्तव्य इति" इत्येवं भाषमाणेन द्वाःस्थेन "क्षम्यतामेष आगच्छामि आगत्य च निखिलं निवेदयामि" इति कथयन्, द्वादशवर्षेण केनापि भिक्षु-बटुनाऽनुगम्यमानः, कोऽपि काषायवासाः, धृत–तुम्बी–पात्रः, भस्म–

---

मुमूर्षुः=मर्तुमिच्छुः। मन्द्रस्वरेण=गम्भीरस्वरेण मेदुरा=सान्द्र-स्निग्धा। "सान्द्रस्निग्धस्तु मेदुर" इत्यमरः। अपश्यता=अनवलोकमानेन, दौवारिकेणेति शेषः। आकर्णि=श्रुतः। अज्ञायि=ज्ञातः। श्रुत इति यावत्। द्वारि तिष्ठतीति द्वाःस्थः=द्वारपालः, तेन। प्रहरिणा=यामिकेन। नगरादिषु सशब्दं जनताजागरकेण चोरनिवारयित्रेति यावत्। कषायेण रक्तं काषायम्, वासो यस्य सः। त्रिः=वारत्रयम्। "द्वित्रिश्चतुरिति

---

एक क्षण के बाद ही उसे फिर वही पैरों की आहट सुनाई दी, अतः फिर तो वह बिगड़ कर बोला—"मुझे उत्तर दिये बिना यह कौन मरणासन्न बहरा आ रहा है ?" उसके बाद "प्रहरी, बिगड़ो मत, क्यों व्यर्थ मरणासन्न और बहरा कहते हो ?" गम्भीर भाव से मधुर वाणी उसे सुनाई दी, किन्तु बोलनेवाला उसके दृष्टिगोचर नहीं हुआ। तदुपरान्त "क्या आपको अभी तक महाराज का यह आदेश विदित नहीं है कि द्वारपाल या पहरेदार को चाहिये कि तीन बार टोकने पर यदि कोई उत्तर न दे तो उसे गोली से उड़ा दे" कह रहे द्वारपाल से "क्षमा कीजिये, मैं यह आ रहा हूं, आकर सारा हाल कहता हूं" कहता हुआ गेरुवा वस्त्र पहने, हाथ में तुम्बी लिये ललाट पर भस्म रमाये, गले में

च्छुरित-ललाटः, रुद्राक्ष-मालिका-सनाथित-कण्ठः, भव्यमूर्त्तिः सन्न्यासी दृष्टः। ततस्तयोरेवमभूदालापः।

सन्न्यासी—कथमस्मान् सन्न्यासिनोऽपि कठोरभाषणैस्तिरस्करोषि?

दौवारिकः—भगवन्! भवान् सन्न्यासी तुरीयाश्रमसेवीति प्रणम्यते, परन्तु प्रभूणामाज्ञामुल्लङ्घ्य निजपरिचयमदद्देवाऽऽयातीत्याक्रुश्यते।

सन्न्यासी-सत्यं क्षान्तोऽयमपराधः; परमद्यावधि सन्न्यासिनः, ब्रह्मचारिणः, पण्डिताः, स्त्रियः, बालाश्च न किमपि प्रष्टव्याः,

---

कृत्वोऽर्थे"। रुद्राक्षमालिकया, सनाथितः = भूषितः, कण्ठो यस्य सः। आलापः = अन्योन्यसम्बोधनपूर्वकभाषणम्।

तुरीयाश्रमसेवी = चतुर्थाश्रमवासी। "स संन्यासी च योगी च न निरग्निर्न चाक्रियः" इति भगवद्वचनेन सन्न्यासिपदस्य न चतुर्थाश्रमि-गैरिकधारिमात्ररूढतेति ध्वनयता पदद्वयं विशेष्यविशेषणभावेनोपात्तमिति विज्ञाः।

अददत् = अयच्छन्, "नाभ्यस्तादि"ति नुम्निषेधः। अपरिचाययन्तः = परिचयमददतः। संन्यासिनामित्यादित्रिकस्य सन्न्यासस्येत्यादित्रिकेण यथासङ्ख्यमन्वयः। अत एव यथासङ्ख्यनामाऽलङ्कारः।

---

रुद्राक्ष की माला धारण किये भव्यमूर्ति कोई संन्यासी दिखाई दिया। उसके पीछे बारह वर्ष का एक भिक्षु बालक आ रहा था। उसके आने के अनन्तर उन दोनों में यों वार्तालाप हुआ।

संन्यासी—तुम हम संन्यासियों को भी कठोर वचनों द्वारा क्यों अपमानित करते हो?

द्वारपाल—भगवन्, आप संन्यासी चतुर्थाश्रमवासी हैं, इसलिए मैं आपको प्रणाम करता हूं, किन्तु महाराज की आज्ञा का उल्लंघन कर परिचय दिये बिना ही आते हैं, अतः आप पर बिगड़ रहा हूं।

संन्यासी—सचमुच, तुम्हारा यह अपराध हमने क्षमा किया, किन्तु अबतक संन्यासियों, ब्रह्मचारियों, पण्डितों, स्त्रियों और बालकों से

आत्मानमपरिचाययन्तोऽपि च प्रवेष्टव्याः।

दौवारिकः—संन्यासिन्! संन्यासिन्! बहूक्तम्, विरम, न वयं दौवारिका ब्रह्मणोऽप्याज्ञां प्रतीक्षामहे। किन्तु यो वैदिकधर्म-रक्षा-व्रती, यश्च सन्न्यासिनां ब्रह्मचारिणां तपस्विनाञ्च सन्न्यासस्य ब्रह्मचर्यस्य तपसश्चान्तरायाणां हन्ता, येन च वीरप्रसविनीयमुच्यते कोङ्कणदेश-भूमिः; तस्यैव महाराज-शिववीरस्याऽऽज्ञां वयं शिरसा वहामः।

संन्यासी—अथ किमप्यस्तु, पन्थानं निर्दिश, आवां शिववीर-निकटे जिगमिषावः।

दौवारिकः—अलमालप्यापि तत्, प्राह्णे महाराजस्य सन्ध्योपा-

---

शिरसा वहामः=सर्वथा पालयामः। अन्तरायाणाम्=विघ्नानाम्। "विघ्नोऽन्तरायः प्रत्यूह" इत्यमरः। हन्ता=निवारयिता।

अलमालप्यापि=इदमालपनीयमपि नास्तीत्यर्थः। "अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वे"ति क्त्वाप्रत्ययः। यथा शाकुन्तले "अलं रुदित्वा, ननु भवतीभ्यामेव स्थिरीकर्त्तव्या शकुन्तले"त्यत्र, शिशुपालवधे "आलप्यालमिदं बभ्रोर्यत्स दारानपाहरदि" त्यत्र च प्रसिद्धोऽयम्। प्राह्णे=पूर्वाह्णे। तुम्बीम्=

---

कुछ न पूछना, यदि वे अपना परिचय न भी दें, तो भी उन्हें प्रवेश कराना।

द्वारपाल—संन्यासी, संन्यासी, बहुत कहा, अब चुप होइये, हम द्वारपाल ब्रह्मा की भी आज्ञा माननेवाले नहीं हैं। लेकिन जिन्होंने वैदिक धर्मरक्षा का व्रत लिया है, जो संन्यासी, ब्रह्मचारी और तपस्वियों के संन्यास, ब्रह्मचर्य और तपस्या के विघ्नों का विघात करते हैं और जिनसे यह कोङ्कणदेशभूमि वीरप्रसू (वीरको जन्मनेवाली) कहलाती है, उन्हीं महाराज वीर शिवाजी की आज्ञा को शिरोधार्य करते हैं।

संन्यासी—अच्छा, जो कुछ भी हो, मार्ग बतलाओ, हम वीर शिवाजी के निकट जाना चाहते हैं।

द्वारपाल—यह मत कहिये, पूर्वाह्ण में महाराज के सन्ध्योपासन के

सनसमये भवादृशानां प्रवेश-समयो भवति ; न तु रात्रौ ।

संन्यासी—तत्किं कोऽपि न प्रविशति रात्रौ ?

दौवारिकः—( साक्षेपम् ) कोऽपि कथं न प्रविशति ? परिचिता वा प्राप्त-परिचय-पत्रा वा आहूता वा प्रविशन्ति, न तु भवादृशाः ; ये तुम्बीं गृहीत्वा द्वाराद् द्वारम्—इति कथयन्नेव तत्तेजसेव धर्षितो मध्य एव विरराम ।

संन्यासी—( स्वगतम् ) राजनीति-निष्णातः शिववीरः । सर्वथा दौवारिकता-योग्य एवायं द्वारपालः स्थापितोऽस्ति । परीक्षितमप्येनमेकस्मिन् विषये पुनः परीक्षिष्ये तावत् । ( प्रकटम् ) दौवारिक ! इत आयाहि, किमपि कर्णे कथयिष्यामि ।

दौवारिकः—( तथा कृत्वा ) कथ्यताम् ।

---

अलाबूपात्रम् । भिक्षाभाजनमिति सव्यङ्ग्यम् । धर्षितः = भीषितः । राजनीतौ, निष्णातः = निपुणः । "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता" इत्यमरः । दौवारिकता = द्वारपालकर्म । परीक्षिष्ये = परीक्षां करिष्ये ।

---

समय आपके सदृश लोगों का प्रवेश-समय है—न कि रात्रि में ।

संन्यासी—तो क्या रात्रि में किसी का भी प्रवेश नहीं होता ?

द्वारपाल—( बिगड़ता हुआ ) किसी का क्यों नहीं होता ? महाराज के परिचित, परिचयपत्रप्राप्त या आहूत लोग रात्रि में प्रविष्ट हो सकते हैं, आप के ऐसे नहीं, जो तुम्बी लेकर दर-दर''' यह कहते मानो उनके प्रभाव से घबराया-सा बीच ही में चुप हो गया ।

संन्यासी ( अपने मन में ) वीर शिवाजी राजनीति में कुशल हैं । उन्होंने पहरेदारी के योग्य ही द्वारपाल रख छोड़ा है । यद्यपि मैं इसकी परीक्षा ले चुका हूँ, फिर भी एक विषय में और दूसरी परीक्षा लूँगा । ( प्रकाश में ) द्वारपाल, इधर आओ कुछ तुम्हारे कान में कहूँगा ।

द्वारपाल—( वैसा कर ) कहिये ।

संन्यासी--निरीक्षस्व त्वमधुना दौवारिकोऽसि, प्राणानगण-यन् जीविकां निर्वहसि, त्वं सहस्रं वाऽयुतं वा मुद्रा राशीकृताः कदापि प्राप्स्यसीति न कथमपि संभाव्यते ।

दौवारिकः—आम्, अग्रे कथ्यताम् ।

संन्यासी—वयञ्च संन्यासिनो वनेषु गिरिकन्दरेषु च विचरामः, सर्वं रसायन-तत्त्वं विद्मः ।

दौवारिकः—स्यादेवम्, अग्रे-अग्रे ?

संन्यासी—तद् यदि त्वं मां प्रविशन्तं न प्रतिरुन्धेस्तदधुनैव परिष्कृतं पारद-भस्म तुभ्यं दद्याम ; यथा त्वं गुञ्जामात्रेणापि द्वापञ्चाशत्सङ्ख्याक-तुलापरिमितं ताम्रं जाम्बूनदं विधातुं शक्नुयाः ।

---

निरीक्षस्व = अवलोकय । त्वम् = निस्वः साधारणदौवारिकः क्लेशेन जीविकां निर्वहन्निति ध्वनिः । अत एव तत्प्रयोगः, अन्यथा 'निरक्षस्वे' त्येतेनैव गतार्थता स्यात् । रसायनानाम् = ताम्रादिभ्यः सुवर्णादिनिर्माणशक्तिमतामोषधिविशेषाणाम् , तत्त्वम् = सामर्थ्यम् । प्रतिरुन्धेः = प्रतिवारयेः । 'रुधिर् आवरणे' इत्यस्य विधौ लिपि रूपम् । परिष्कृतम् = सुसाधितम् । तुला = पलानां शतम् । "तुला स्त्रियां पलशतमि"त्यमरः । ताम्रम्, धातुनाम । जाम्बूनदम् = सुवर्णम् ।

---

संन्यासी—देखो, तुम इस समय द्वारपाल हो, प्राणों की बाजी लगाकर अपना जीवन निर्वाह करते हो । तुम कभी हजार या दस हजार रुपये इकट्ठे पा जाओगे, यह किसी तरह संभव नहीं है ।

द्वारपाल—अच्छा, आगे कहिये ।

संन्यासी—हम संन्यासी हैं, वनों में और कन्दराओं में विचरते हैं, सारा रसायन-रहस्य हमें ज्ञात है ।

द्वारपाल—हो सकता है, आगे आगे ?

संन्यासी—यदि तुम मेरे प्रवेश में बाधा न डालो, तो मैं अभी शोधित पारे की भस्म तुम्हें दूँ जिससे तुम एक रत्ती से भी लगभग पक्का ७५ सेर ताँबा सोना बना डालोगे ।

दौवारिकः—हंहो ! कपटसंन्यासिन् !! कथं विश्वासघातं स्वामिवञ्चनञ्च शिक्षयसि ? ते केचनान्ये भवन्ति जार-जाताः; ये उत्कोच-लोभेन स्वामिनं वञ्चयित्वा आत्मानमन्धतमसे पातयन्ति, न वयं शिवगणास्तादृशाः। ( संन्यासिनो हस्तं धृत्वा ) इतस्तु सत्यं कथय, कस्त्वम् ? कुत आयातः ? केन वा प्रेषितः ?

संन्यासी—( स्मित्वेव ) अथ त्वं मां कं मन्यसे ?

दौवारिकः—अहं तु त्वामस्यैव ससेनस्याऽऽयातस्य अपजलखानस्य—

संन्यासी—( विनिवार्य मध्य एव ) धिग् धिक् !

दौवारिकः—कस्याप्यन्यस्य वा गूढचरं मन्ये। तदादेशं पालयिष्यामि प्रभुवर्यस्य। ( हस्तमाकृष्य ) आगच्छ दुर्गाध्यक्ष-समीपे, स एवाभिज्ञाय त्वया यथोचितं व्यवहरिष्यति।

---

जारजाताः, "अमृते जारजः कुण्डो मृते भर्तरि गोलकः" इति शास्त्रेण पत्यौ जीवति परपुरुषेण समुत्पादिता जारजाता इत्युच्यन्ते, अत्र निन्दार्थकम्। उत्कोचो हिन्द्यां "घूस" इति, "रिशवत" इति चोच्यते।

---

द्वारपाल—अरे कपटसंन्यासी, मुझे विश्वासघात और स्वामिवंचना सिखलाते हो ? वे कोई दूसरे ही जारपुत्र हैं, जो घूस के लोभ से स्वामी को वञ्चित कर अपना नरकपात करते हैं, हम शिवाजी के अनुचर ऐसे नहीं हैं। ( संन्यासी का हाथ पकड़ कर ) अब सच बतलाओ तुम कौन हो ? कहाँ से आये हो ? किसने तुम्हें भेजा है ? —

संन्यासी—( मुसकिराता-सा ) अच्छा, तुम मुझे कौन समझते हो ?

द्वारपाल—मैं तो तुम्हें सेना सहित आये हुए इसी अफजल खाँ...

संन्यासी—( बीच ही में रोक कर ) छिः छिः।

द्वारपाल—या किसी दूसरे का गुप्तचर समझता हूँ। इसलिए महाराज का आदेश-पालन करूँगा। (हाथ पकड़ कर) दुर्गाध्यक्ष के समीप आओ, वे ही सोच समझ कर तुम्हारे साथ समुचित व्यवहार करेंगे।

ततः संन्यासी तु—"त्यज, नाहं पुनरायास्यामि, नाहं पुनरेवं कथयिष्यामि, महाशयोऽसि, दयस्व, दयस्व"—इति सहस्रधा समचकथत्, तथाऽपि दौवारिकस्तु तमाकृष्य नयन्नेव प्रचलितः।

अथ यावद् द्वारस्थ-स्तम्भोपरि संस्थापितायां काच-मञ्जूषायां जाज्वल्यमानस्य प्रबल-प्रकाशस्य दीपस्य समीपे समायातस्तावत्संन्यासिनोक्तम्-"दौवारिक ! अपि मां पूर्वमपि कदाऽप्यद्राक्षीः ?" ततो दौवारिकः पुनस्तं निपुणं निरीक्षमाणो मन्द्रेण स्वरेण, अरुणापाङ्गाभ्यां लोचनाभ्याम्, गौरतरेण वर्णेन, चुम्बितयौवनेन वयसा, निर्भीकेण हारिणा च मुख-मण्डलेन पर्यचिनोत्। भुशुण्डी-समुत्तोलन-किण-कर्कश-करग्रहमपहाय, सलज्ज इव च नम्रीभूय, प्रण-

---

काचघटिता मञ्जूषा काचमञ्जूषा = रक्तवर्तिका। "लालटेन" इति हिन्दी। अपाङ्गः=नेत्रप्रान्तभागः। "अपाङ्गौ नेत्रयोरन्तावि"त्यमरः। चुम्बितम् = स्पृष्टम्, यौवनम् = नवं वयो येन तेन। निर्भीकेण = भयशून्येन। हारिणा = मनोहरेण। पर्यचिनोत् = परिचितवान्। भुशुण्ड्याः=आयुधविशेषस्य, समुत्तोलनेन = उत्थापनेन, यः किणः= चिह्नविशेषः, तेन कर्कशस्य=कठोरस्य, करस्य, ग्रहः=ग्रहणम्। गौरसिंहः कथाभागे पूर्वं गौरबटुनाम्ना समायातोऽयमेवेति न विस्मर्तव्यम्।

---

तत्पश्चात् संन्यासी तो "छोड़ो, मैं फिर नहीं आऊँगा, मैं अब नहीं कहूँगा, तुम उदार हो, दया करो," यों हजारों मिन्नतें करने लगा, किन्तु द्वारपाल फिर भी खींचता हुआ ले चला।

जब द्वारपाल फाटक के खम्भे के ऊपर रक्खी हुई कांच की पेटी में जल रहे तेज दीपक के पास पहुँचा, तब संन्यासी ने कहा—"द्वारपाल, क्या पहले भी कभी तुमने मुझे देखा था ?" तब तो गौर से देख रहे द्वारपाल ने गंभीर स्वर, आरक्त नेत्रों के प्रांत, अतिशय गौर वर्ण, उभड़ रही नई जवानी और निर्भीक मनोहर मुखमण्डल से उसे पहचान लिया। बन्दूक चलाने से पड़े छालों के घावों से कठोर कर का ग्रहण छोड़ कर, सहमा-सा सिर झुका कर प्रणाम करता हुआ बोला, "ओह ! क्या

मन्नुवाच—"आः ! कथं श्रीमान् गौरसिंह आर्यः ? क्षम्यतामनुचित-व्यवहार एतस्य ग्राम्य-वराकस्य"। तदवधार्य तस्य पृष्ठे हस्तं विन्यस्यन् संन्यासिरूपो गौरसिंहः समवोचत्—दौवारिक ! मया बहुशः परीक्षितोऽसि, ज्ञातोऽसि यथायोग्य एव पदे नियुक्तोऽसि चेति। त्वादृशा एव प्रभूणां पुरस्कारभाजनानि भवन्ति, लोकद्वयञ्च विजयन्ते। तव प्रामाणिकतां जानीत एवात्रभवान् प्रभुवर्य्यः, परमहमपि विशिष्य कीर्तयिष्यामि। निर्दिश तावत्, कुत्र श्रीमान् ? किञ्चानुतिष्ठति ?

ततः पुनर्बद्धाञ्जलेर्दौवारिकस्य किमपि कर्णे कथितमाकर्ण्य, प्रधानद्वारमुल्लङ्घ्य, नेदीयस्यामेकस्यां निम्बतरु-तल-वेदिकायां सह-चरं समुपवेश्य, तुम्बीमेकतः संस्थाप्य, स्वाङ्गरक्षिकावरण-काषाय-वसनं चैकतो निम्बशाखायामवलम्बय्य, पट-खण्डेन पक्ष्मणोः

नेदीयस्याम्=समीपवर्तिन्याम्। अङ्गरक्षिका=कञ्चुकस्यैव संक्षेपः। "अंगरखी" इति हिन्दी। पक्ष्मणोः=अक्षिलोम्नोः। "पक्ष्माक्षिलोम्नी"

संमान्य श्रीमान् गौरसिंह हैं ? इस बेचारे ग्रामीण के अनुचित व्यवहार की क्षमा हो।" यह सुन कर उसकी पीठ पर हाथ फेरते हुए संन्यासी रूपधारी गौरसिंह ने कहा, "द्वारपाल, मैंने तुम्हारी बार बार परीक्षा ली है, तुम्हें जान गया हूँ और उचित पद पर तुम्हारी नियुक्ति हुई है। तुम्हारे ऐसे ही स्वामी के पुरस्कार के पात्र होते हैं और दोनों लोकों में संमान पाते हैं। तुम्हारी प्रामाणिकता को पूज्य प्रभु जानते ही हैं, लेकिन मैं भी विशेष रूप से कहूँगा, बतलाओ, महाराज कहाँ हैं और क्या करते हैं ?"

तत्पश्चात् हाथ जोड़े हुए द्वारपाल ने उनके कान में कुछ कहा, उसे सुनकर प्रधान फाटक पार कर अत्यन्त निकटवर्ती एक नीम के तले के चबूतरे पर साथी को बैठा कर, तुम्बी एक ओर रखकर, अँगरखी को आवृत करने ( ढकने ) वाला गेरुआ वस्त्र एक ओर नीम की शाखा पर टाँग कर, कपड़े के टुकड़े से आँख, गाल, कान, भौंह, ठोंड़ी, नाक

कपोलयोः कर्णयोर्भ्रुवोश्चिबुके नासायां केशप्रान्तेषु च छुरितामिव विभूतिं प्रोञ्छ्य, स्कन्धयोः पृष्ठे च लम्बमानान् मेचकान् कुञ्चितान् कचानाबध्य, सहचर–पोटलिकात उष्णीषमादाय, शिरसि चाऽऽधाय, सुन्दरमुत्तरीयं चैकं स्कन्धयोर्निक्षिप्य, दौवारिक-निर्देशानुसारं श्रीशिववीरालंकृतामट्टालिकां प्रति प्रातिष्ठत ।

शिववीरस्तु कस्याञ्चिच्चन्द्रचुम्बिन्यां सान्द्र–सुधासार–संलिप्त-भित्तिकायां धूपधूपितायां गजदन्तिकावलम्बित–विविध-च्छुरिका–

---

त्यमरः । "पलक" इति हिन्दी । चिबुकं "ठोड़ी" इति हिन्दीप्रसिद्धम् । छुरिताम् = व्याप्ताम् , संलग्नामित्यर्थः । प्रोञ्छ्य = दूरीकृत्य । "पोंछकर" इति हिन्दी । मेचकान् = कृष्णवर्णान् , 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । पोटलिकातः = "गठरी" इति भाषायाम् ।

शिववीरोऽट्टालिकायामुपविष्ट आसीदिति सम्बन्धः । अट्टालिकां विशिनष्टि–चन्द्रचुम्बिन्याम् = अत्युच्छ्रायायाम् । असम्बन्धे सम्बन्धवर्णनादतिशयोक्तिः । सान्द्रेण=घनेन, सुधासारेण = चूर्णद्रव्येण, संलिप्ताः=रूषिताः, भित्तिकाः = कुड्यानि यस्यां तस्याम् । स्वल्पो गजदन्तो गजदन्तिका = भित्तिशङ्कुः, "खूंटी" इति हिन्दी, तस्यामवलम्बिताः, विविधाः = अनेकप्रकाराः, छुरिकाखड्गरिष्टिका यस्यां तस्याम् । छुरिकाऽसिधेनुका, खड्गोऽसिः,

---

और केशों में लगी हुई भस्म पोंछ कर, कन्धे और पीठ पर लटक रहे काले घुँघुराले बालों को बाँधकर, साथी बालक की गठरी में से पगड़ी निकाल कर सिर पर पहन कर और एक सुन्दर डुपट्टा कन्धे पर डाल कर द्वारपाल के कथनानुसार वीर श्रीशिवाजी द्वारा अलंकृत अटारी की ओर चले ।

वीर श्रीशिवाजी धूप से सुगन्धित, सोने के पिंजड़ों में लटक रहे सुग्गे, कोयल, चकोर और मैना के कलरव से सुशोभित एक गगनचुम्बी अटारी में, जिसकी दीवारें गाढ़े चूने से पुती थीं, खूँटियों पर भाँति-भाँति

खड्ग–रिष्टिकायां सुवर्ण–पिञ्जर–परिलम्बमान–शुक–पिक–चकोर–सारिका–कल–कूजित–पूजितायामट्टालिकायां सन्ध्यामुपास्योपविष्ट आसीत्। परितश्च तस्यैव खर्वामप्यखर्व–पराक्रमां श्यामामपि यशःसमूह–श्वेतीकृत-त्रिभुवनां कुशासनाश्रयामपि

---

रिष्टिका तद्विशेषः। सुवर्णपिञ्जरेषु, परिलम्बमानानां = शुकपिकचकोर-सारिकाणां, कलकूजितैः=मधुरभाषणैः, पूजितायाम् = भूषितायाम्। शुकाः=कीराः, पिका =कोकिलाः, चकोराः = जीवञ्जीवाः, सारिकाः = शारिकाः, "मैना" इति हिन्दी। परितश्च तस्यैव मूर्तिं दर्शं दर्शं वयस्याः कटानध्यवस्यन्निति सम्बन्धः। मूर्तिं विशिनष्टि – खर्वाम्=ह्रस्वाम्। शिव-वीरः खर्वः स्थूलोऽपठितश्चाऽऽसीदति वृत्तवेदिनो वदन्ति। अखर्वः= अनल्पः, पराक्रमो यस्यान्ताम्। अखर्वस्य पराक्रमो यस्यामिति विगृहीते यः खर्वस्तस्मिन्नखर्वस्य पराक्रमः कुत आयात इति विरोध इवाऽऽभासते। परिहारोपायश्च वास्तविकविग्रहाश्रयणेन। तथा च विरोधो न वास्तव इति विरोधाभासोऽत्रालङ्कारः। कलितगौरवामपि कलितलाघवामित्यन्तं सर्वत्रैव-मेव। सोऽपि च स्वभावोक्त्योत्प्रेक्षया चानुप्राणित इति विपुलां शोभामा-श्रयति। श्यामाम्=कृष्णाम। यशःसमूहेन=कीर्त्तिकूटेन, श्वेतीकृतम्= धवलितम्, त्रिभुवनं यया ताम्। श्यामया धवलीकरणं विरोधविषयः,

---

के छूरे, कृपाण और तलवार लटक रही थीं, सन्ध्यावन्दन से निवृत्त होकर बैठे थे। उनकी विशाल ललाटवाली, प्रबल बाहुदण्डवाली, आरक्तान्तनेत्रवाली, शंख सदृश कण्ठवाली, सुसंगठित नसों से युक्त, गोल और काली मूँछदाढ़ी वाली, मूर्तिमती वीरता-सी, देहधारिणी धीरता-सी, युद्ध-भूमि में असाधारण फुर्तीली मूर्ति का पुनः पुनः अवलोकन कर प्रसन्नता का अनुभव कर रहे मित्रगण उन्हीं के चारों ओर चटाई पर बैठे थे। चारों ओर उनकी मूर्ति को; जोकि देखने में छोटी होने पर भी विपुल पराक्रम शालिनी थी, काली होने पर भी यशोराशि से तीनों भुवनों को धवलित कर चुकी थी, कुशासन पर आसीन होने पर भी

सुशासनाश्रयां पठन-पाठनादि-परिश्रमानभिज्ञामपि नीति-निष्णातां स्थूलदर्शनामपि सूक्ष्म-दर्शनां ध्वंसकाण्डव्यस-निनीमपि धर्म-धौरेयीं कठिनामपि कोमलाम् उग्रामपि शान्तां शोभित-विग्रहामपि दृढ-सन्धि-बन्धां कलित-गौरवामपि कलित-

परिहारश्च कीर्त्तेः श्वैत्याभिधानद्वारेण । कुशानाम्, आसनम्=विष्टरः, आश्रयः=अवस्थितिः, यस्यास्ताम् । सुशासनम्=शोभनराष्ट्रस्थितिः, आश्रयो यस्यास्ताम् । कुत्सितं शासनं कुशासनमाश्रयो यस्या इति विग्रहे या कुशासनाश्रया सा कथं सुशासनाश्रयेति विरोधः । स्थूलं दर्शनम्=नेत्रं यस्यास्ताम् । सूक्ष्मं दर्शनम्=कर्त्तव्याकर्त्तव्यविचारो यस्यास्ताम् । या स्थूलदर्शना सा कथं सूक्ष्मदर्शनेति विरोधः सामान्यतोऽर्थाश्रयणे । सूक्ष्मबुद्धित्वरूपवास्तविकार्थे परिहारश्च । ध्वंसकाण्डस्य=विधर्मिविशसनस्य, व्यसनमस्ति यस्यां तादृशीमपि धर्मधौरेयीम्=धर्मभारधारिणीम् । या ध्वंसव्यसनवती सा कथं धर्मं पालयेदिति विरोधः, विधर्मिवधेन सनातन-धर्मपालिका चेति विरोधपरिहारः । उग्रशान्तयोर्विरोधः स्पष्ट एव, उग्रत्वं दुर्धर्षत्वाच्छान्तत्वञ्च दयाविभूषितत्वादिति परिहारः । कठिनकोमलयोः स्पर्शपरत्वे विरोधः । तयोः पुनः शरीर-हृदय-गतत्वे स्थलविशेषविषयत्वे वा परिहारः । शोभितः=सुन्दरः, विग्रहः=संग्रामो यस्यास्ताम् । दृढः=स्थिरः, सन्धिबन्धः=सन्धिप्रस्तावो यस्यास्तामिति विरोधः, परिहारस्तु विग्रहशब्दस्य शरीररूपार्थाश्रयणेन, सन्धिबन्धशब्दोऽपि अवयवसन्धान-परः । कलितगौरवलाघवयोर्विरोधः स्फुट एव, गौरवमित्यस्य गाम्भी-

सुन्दर शासन की आधार भित्ति थी, पठन-पाठन आदि के परिश्रम से अपरिचित होने पर भी राजनीति में निष्णात ( दक्ष ) थी देखने में स्थूल होनेपर भी सूक्ष्म दृष्टि ( कर्तव्याकर्तव्य विचार ) सम्पन्न थी, विधर्मियों ( म्लेच्छों ) की हिंसा की व्यसनिनी होने पर भी धर्म का भार धारण करनेवाली थी, कठोर होने पर भी कोमल थी, उग्र होने पर भी शान्त थी, सुन्दर शरीरवाली थी और उसकी सन्धियों के जोड़ सुदृढ़

लाघवां विशाल-ललाटां प्रचण्ड-बाहुदण्डां शोणापाङ्गां कम्बुग्रीवां सुनद्धस्नायुं वर्त्तुल-श्याम-श्मश्रुं धारिताकृतिमिव वीरतां विग्रहिणी-मिव धीरतां समासादित-समर-स्फूर्त्तिं मूर्तिं दर्शं दर्शं परं प्रसाद-मासादयन्तस्तस्य वयस्याः कटानध्यवसन्। तेषु च अपजलखान-दमन-विषयक-वार्तामारिप्सुष्वेव कश्चिद् वेत्रहस्तः प्रतीहारः प्रविश्य, वेत्रं कक्षे संस्थाप्य, शिरो नमयित्वा, अञ्जलिं बद्ध्वा न्यवीविदत्—

यंमित्यर्थाश्रयणे लाघवशब्दस्य चातुर्यार्थकत्वे च परिहारः। शोणापाङ्गाम्= रक्तकटाक्षाम्। सुनद्धाः=शोभनतया स्थिताः, स्नायवो यस्यास्ताम्। वर्तुलं श्यामं च श्मश्रु यस्यास्ताम्। उत्प्रेक्षते—धारिता=गृहीता, आकृतिर्यया ताम्। विग्रहिणीमिव=शरीरवतीमिव। समासादिता=लब्धा, समरे स्फूर्तिर्यया ताम्। दर्शं दर्शम्=दृष्ट्वा दृष्ट्वा। कटान्=तृणनिर्मितो-पवेशनानि। "चटाई" इति हिन्दी। "उपान्वध्याङ् वसः" इत्याधारस्य कर्मत्वम्। आरिप्सुषु=प्रारम्भं चिकीर्षुषु। न्यवीविदत्=निवेदितवान्।

थे, गाम्भीर्यशालिनी होने पर भी चातुर्यसम्पन्न थी*। मित्रमण्डली अफ़जल खाँ के दमन से सम्बन्ध रखनेवाली बातें आरम्भ करना ही चाहती थी कि एक वेतधारी द्वारपाल ने प्रविष्ट होकर, वेत को बगल में दबा कर, सिर झुका कर, हाथ जोड़ कर निवेदन किया, "महाराज,

* यहाँ पर—जो स्वयं खर्वा है वह अखर्व के पराक्रम से युक्त कैसे? जो स्वयं काली है वह त्रिभुवन को धवलित कैसे कर सकती है? जो स्वयं कुशासनाश्रय है वह सुशासनाश्रय कैसे हो सकती है? जो पठन-पाठन आदि के परिश्रम से कोरी है वह नीति में निष्णात कैसे हो सकती है? जो स्थूलदर्शना है वह सूक्ष्मदर्शना कैसे? जो हत्याकाण्ड व्यसिनी है वह धर्मधुरन्धर कैसे? जो कठिना है वह कोमला कैसे? जो उग्रा (कोपना) है वह शान्ता कैसे? जो सुन्दर संग्रामवाली है वह दृढ़सन्धिप्रस्तावबाली कैसे? जो गौरवयुक्ता है वह लाघवयुक्ता कैसे? यों आपाततः विरोध मालूम पड़ता है। पूर्वोक्त अर्थ करने से विरोध हट जाता है। ऐसे स्थलों में आलङ्कारिक 'विरोधाभास अलङ्कार' मानते हैं।

"प्रभो ! श्रीमान् गौरसिंहो दिदृक्षतेऽत्र भवन्तम्" तदाकर्ण्य— "आम् ! प्रवेशय प्रवेशय" इति सानन्दं सोत्साहं च कथितवति महाराष्ट्र-मण्डलाऽऽखण्डले, प्रतीहारो निवृत्य, सपद्येव तं प्रावीविशत् ।

तमवलोक्यैव "इत इतो गौरसिंह ! उपविश, उपविश, चिराय दृष्टोऽसि, अपि कुशलं कलयसि ? अपि कुशलिनस्तव सहवासिनः ? अप्यङ्गीकृत-महाव्रतं निर्वहथ यूयम् ? अपि कश्चिन्नूतनो वृत्तान्तः ?" इति कुसुमानीव वर्षता पीयूष-प्रवाहेणेव सिञ्चता मृदुना वचनजातेन तत्रभवता शिववीरेणाऽऽद्रियमाणः, आपृच्छ्यमानश्च, त्रिः प्रणम्य, अन्तरङ्ग-मण्डली-जुष्ट-कटे समुपविश्य, करौ सम्पुटीकृत्य, "भगवन् ! अखिलं कुशलं प्रभूणामनुग्रहेणास्माकमखिलानाम्, अङ्गीकृत-महाव्रते

---

दिदृक्षते=द्रष्टुमिच्छति, "ज्ञाश्रुस्मृदृशां सन" इत्यात्मनेपदम् ।

आखण्डलशब्द इन्द्रवाच्यपि प्रकृते श्रेष्ठपरः । प्रावीविशत्= अन्तर्णीतवान् । जुष्टम्=सेवितम् । अध्युषितमिति यावत् । धात्, लुङो

---

श्रीमान् गौरसिंह प्रभु-चरणों का दर्शन करना चाहते हैं ।" यह सुन कर आनन्द और उत्साह के साथ महाराष्ट्र देश के अधिपति के "अच्छा, लिवा लाओ, लिवा लाओ" कहने पर द्वारपाल ने लौट कर तुरन्त उन्हें प्रविष्ट कराया ।

उन्हें देखते ही—"गौरसिंह इधर बैठो, इधर बैठो, चिरकाल से दीख पड़े हो, कुशल तो है, तुम्हारे सहयोगी सब कुशली तो हैं ? तुम लोग स्वीकृत महाव्रत को निभाते तो हो न ? क्या कोई नया समाचार है" यों फूल-से बरसा रहे मानो अमृत की लहरों से नहला रहे कोमल वचनों द्वारा महाराज वीर शिवाजी से आदृत हो रहे और पूछे जा रहे गौरसिंह ने तीन बार प्रणाम कर उसी चटाई पर, जिस पर कि मित्र-मण्डली बैठी थी, बैठकर हाथ जोड़कर कहा—"भगवन्, प्रभुचरणों के अनुग्रह से हम सब लोग सब तरह कुशली हैं, स्वीकृत महाव्रत में कहीं

च मा स्म पदं धात् कश्चनान्तराय इत्येव सदा प्रार्थ्यते भगवान् भूतनाथः, नूतनः प्रत्नश्च को नामाद्यतनसमये वक्तव्यः श्रोतव्यश्च वृत्तान्तः—ऋते दुराचारात् स्वच्छन्दानामुच्छृङ्खलानामुच्छिन्न-सच्छीलानां म्लेच्छ-हतकानाम्" इति कथयामास। ततश्च तेषा-मेवमभूदालापः।

शिववीरः—अथ कथ्यतां को वृत्तान्तः ? का च व्यवस्था अस्म-न्महाव्रताश्रम-परम्परायाः ?

गौरसिंहः—भगवन् ! सर्वं सुसिद्धम, प्रतिगव्यूत्यन्तरालमङ्गी-कृत-सनातनधर्म-रक्षा-महाव्रतानां धारित-मुनि-वेषाणां वीरवरा-णामाश्रमाः सन्ति। प्रत्याश्रमञ्च वलीकेषु गोपयित्वा स्थापिताः परश्शताः खड्गाः, पटलेषु तिरोभाविताः शक्तयः, कुशपुञ्जान्तः-

---

रूपं, माङो योगादडभावः। प्रत्नः= पुरातनः, "पुराणे प्रतनप्रत्नपुरातन-चिरन्तना" इत्यमरः। अद्यतनसमये = सम्प्रति। "आजकल" इति हिन्दी। अद्यतनशब्दो वैयाकरणैः परिभाषितो यस्मिन्नर्थे अतीतरात्र्य-र्धारब्धागामिरात्र्यर्धचरमावयवकरूपे—न तदभिप्रायेण प्रयोग इति वेदितव्यम्। स्वच्छन्दानामित्यारभ्य म्लेच्छान्तेऽनुप्रासः। महाव्रतम् =

---

कोई विघ्न-बाधा उपस्थित न हो यही सदा भगवान् विश्वनाथ से प्रार्थना करते हैं, आजकल निरंकुश, उद्दण्ड, शील और सदाचार विहीन म्लेच्छों के दुराचार के सिवा कहने और सुनने योग्य और कौन वृत्तान्त है ?" तदुपरान्त उनका यों वार्तालाप हुआ।

वीर शिवाजी—कहिये हमारे महाव्रताश्रमों का क्या हाल है और, क्या व्यवस्था है ?

गौरसिंह—भगवन्, सब ठीक हो गया है, प्रति दो कोस के बीच में सनातन-धर्मरक्षा का महाव्रत लिये हुए मुनिवेषधारी महावीरों के आश्रम हैं। प्रत्येक आश्रम में छप्परों की ओरियो में सैकड़ों तलवारें छिपाकर रख ली हैं, छप्परों में शक्तियाँ (आयुधविशेष) छिपाई हैं, कुशों

स्थापिता भुशुण्ड्यश्च समुल्लसन्ति। उञ्छस्य, शिलस्य, समिदाह-रणस्य, इङ्गुदी-पर्य्यन्वेषणस्य, भूर्जपत्र-परिमार्गणस्य, कुसुमावच-यनस्य, तीर्थाटनस्य, सत्सङ्गस्य च व्याजेन, केचन जटिलाः, परे मुण्डिनः, इतरे काषायिणः, अन्ये मौनिनः, अपरे ब्रह्मचारिणश्च बहवः पटवो बटवश्चराः सञ्चरन्ति। विजयपुरादुड्डीयात्राऽऽगच्छन्त्या मक्षिकाया अप्यन्तः स्थितं वयं विद्मः, किं नाम एषां यवनहतकानाम् ?

शिववीरः-साधु साधु, कथं न स्यादेवम् ? भारतवर्षीया यूयम्, तत्रापि महोच्चकुलजाताः, अस्ति चेदं भारतं वर्षम्, भवति च स्वाभाविक एवानुरागः सर्वस्यापि स्वदेशे, पवित्रतमश्च यौष्मा-

---

सनातनधर्मरक्षा। उञ्छः = पतितकणानामेकैकशो ग्रहणम्। शिलम् = क्षेत्रादौ स्वामित्यक्तानां कणिशानां ग्रहणम्। "उञ्छः कणश आदानं कणि-शाद्यर्जनं शिलमि"त्यमरः। इङ्गुद्याः = पिण्याकस्य, पर्यन्वेषणम् = सर्वतो मार्गणम्, तस्य। जटिलाः = जटायुताः। "लोमादि-पामादि-पिच्छादिभ्यः शनेलचः"। काषायिणः = गैरिकवसनाः। मक्षिकाया अपि, किमुत मनुष्याणाम्। कैमुत्ययुता लोकोक्तिः। अन्तः स्थितम् = मानसे विद्य-

---

के ढेर के अन्दर बन्दूक छिपाकर रक्खी हैं, खेतों में अनाज के बीज और बाल बीनने, समिधा लाने, इङ्गुद ( हिंगोट या मालकांगनी के बीज ) खोजने, भूर्जपत्र ढूँढने, फूल तोड़ने, तीर्थाटन करने और सत्संग करने के बहाने कोई जटा धारण किये, कोई मूँड मुँड़ाये, कोई गेरुआ वस्त्र पहने, कोई मौनी बने, कोई ब्रह्मचारी का स्वांग रचे अनेक सुचतुर गुप्तचर बालक घूमते हैं। बीजापुर से उड़कर यहाँ आ रही मक्खी के अन्दर की बात तक का हम लोग पता लगा लेते हैं, इन दुष्ट यवनों की तो कौन कहे ?

वीर शिवाजी—धन्यवाद ! धन्यवाद !! ऐसा क्यों न हो ? आप लोग भारतीय हैं, उसमें भी ऊँचे खानदान में पैदा हुए हैं और यह भारतवर्ष है, अपने देश पर सभी का स्वाभाविक प्रेम होता है। आप

कीणः सनातनो धर्मः, तमेते जाल्माः समूलमुच्छिन्दन्ति, अस्ति च "प्राणा यान्तु; न च धर्मः" इत्यार्याणां दृढः सिद्धान्तः। महान्तो हि धर्मस्य कृते लुण्ठ्यन्ते, पात्यन्ते, हन्यन्ते, न च धर्मं त्यजन्ति, किन्तु धर्मस्य रक्षायै सर्वसुखान्यपि त्यक्त्वा, निशीथेष्वपि, वर्षास्वपि, ग्रीष्म-घर्मेष्वपि, महारण्येष्वपि, कन्दरिकन्दरेष्वपि, व्यालवृन्देष्वपि, सिंह-सङ्घेष्वपि, वारण-वारेष्वपि, चन्द्रहास-चमत्कारेष्वपि च निर्भया विचरन्ति। तद् धन्याः स्थ यूयं वस्तुत आर्यवंशीयाः वस्तुतश्च भारतवर्षीयाः।

अथ कथ्यतां कोऽपि विशेषोऽवगतो वा अपजलखानस्य विषये?

गौरसिंहः—"अवगतः, तत्पत्रमेव दर्शयामि"—इति व्याहृत्य,

---

मानम्। जाल्माः = अविवेकिनः। "जाल्मोऽसमीक्ष्यकारी स्यादि"त्यमरः। "जालिम" इति हिन्दी। लुण्ठ्यन्ते = चोर्यन्ते। निशीथेषु = अर्धरात्रेषु। वारणवारेषु = हस्तिसमूहेषु। "समूहे निवहव्यूहसंदोहविसरव्रजाः।

---

लोगों का सनातन धर्म अत्यन्त पवित्र है। उसे ये जालिम समूल उखाड़ रहे हैं। "प्राण जाय; धर्म न जाय" आर्यों का ऐसा दृढ़ सिद्धान्त है। धर्म के लिये महापुरुष लूटे जाते हैं, गिराये जाते हैं, मारे जाते हैं, लेकिन धर्म नहीं छोड़ते, किन्तु धर्म की रक्षा के लिये सब सुखों को तिलाञ्जलि देकर, अर्द्धरात्रि में भी, मूसलाधार वृष्टि में भी, लू की लपटों में भी, महा अरण्यों में भी, पर्वतों की गुफाओं में भी, शेरों के झुण्डों में भी, हाथियों के यूथों में भी और तलवारों की चमचमाहटों में भी निर्भय होकर घूमते हैं। सो आप लोग धन्य हैं, वास्तविक आर्यवंशीय हैं और यथार्थ भारतीय हैं।

यदि अपजल खाँ के विषय में कोई विशेष खबर लगी हो तो कहिये।

गौरसिंह ने "लगी है, उसका पत्र ही दिखलाता हूँ" कहकर पगड़ी

उष्णीष–सन्धौ स्थापितं कन्यापहारक–यवन–युवक–मृत–शरीर–वस्त्रान्तः प्राप्तं पत्रं बहिश्चकार ।

सर्वे च विजयपुराधीशमुद्रामवलोक्य, "किमेतत् ? कुत एतत् ? कथमेतत् ? कस्मादेतत् ?" इति जिज्ञासमानाः सोत्कण्ठा वितस्थिरे । गौरसिंहस्तु शिववीरस्यापि तत्प्राप्ति-चरित-शुश्रूषामवगत्य संक्षिप्य सर्वं वृत्तान्तमवोचत् । ततस्तु "दृश्यताम् , प्रसार्यताम्, पठ्यताम् , कथ्यताम् , किमिदमि"ति पृच्छति शिववीरे, गौरसिंहो व्याजहार–

भगवन् ! सर्पाकारैरक्षरैः पारस्य–भाषायां लिखितं पत्रमेतदस्ति । एतस्य सारांशोऽयमस्ति—विजयपुराधीशः स्वप्रेषितमपजल-

---

स्तोमौघ-निकर-व्रात-वार संघात-सञ्चया" इत्यमरः । कन्यापहारकस्य = बालिकाचोरस्य, यवनयुवकस्य, मृतस्य = गतासोः, मारितस्येति यावत् । शरीरस्य,वस्त्रान्तः = वसनान्तराले, प्राप्तम् = लब्धम् ।

विजयपुरम् = 'बीजापुर' इति भाषायां प्रसिद्धं नगरम् । वितस्थिरे = स्थिताः । "समवप्रविभ्यः स्थ"इत्यात्मनेपदम् । शुश्रूषाम् = श्रोतुमिच्छाम् ।

सर्पाकारैः = वक्रैः । सोपहासम् । पारस्यानाम् = पारसीकानाम्, भाषायाम् = वाचि । "फारसी भाषा में" इति हिन्दी ।

---

के अन्दर रक्खा हुआ कन्या का अपहरण करनेवाले यवनयुवक के, मृतशरीर के वस्त्रों में मिला हुआ पत्र बाहर निकाला ।

बीजापुर के अधिपति की मुहर देखकर सबके सब "यह क्या ? यह कहाँ से आया, कैसे मिला, किससे प्राप्त हुआ ?" यों जानने के लिये इच्छुक हुए, सभी को यह जानने की उत्सुकता हुई । गौरसिंह ने वीर शिवाजी की भी उस पत्र की प्राप्ति का वृत्तान्त सुनने की इच्छा जानकर संक्षेप में सारा हाल कह सुनाया । फिर तो दिखाइये, खोलिये, पढ़िये, कहिये यह क्या है यों वीर शिवाजी के पूछने पर गौरसिंह ने कहा—"महाराज, यह पत्र सर्पाकार अक्षरों से ( अरबी लिपि से ) फारसी भाषा में लिखा हुआ है । इसका यह सारांश है—बीजापुर के

खानं सेनापतिं सम्बोध्य लिखति यत्–"वीरवर! महाराष्ट्र-राजेन सह योद्धुं प्रस्थितोऽसीति मा स्म भूत्कश्चनान्तरायस्तव विजये। शिवं युद्धे जेष्यसि चेत्; पद्भ्यां सिंहं जितवानसीति मंस्ये, किन्तु सिंहहननापेक्षया जीवतः सिंहस्य वशीकार एवाधिकं प्रशस्यः। तद् यदि छलेन जीवन्तं शिवमानयेस्तद् वीरपुङ्गवोपाधि–दान–सह-कारेण तव महतीं पदवृद्धिं कुर्य्याम्। गोपीनाथपण्डितोऽपि मया तव निकटे प्रस्थापितोऽस्ति, स मम तात्पर्यं विशदीकृत्य तव निकटे कथयिष्यति। प्रयोजनवशेन शिवमपि साक्षात्करिष्यति" इति।

इत्याकर्णयत एव शिववीरस्य अरुण–कौशेय–जाल–निबद्धौ

---

'शिवं युद्धे जेष्यसि चेत् पद्भ्यां सिंहं जितवानसी'ति निदर्शनालङ्कारः। मंस्ये = ज्ञास्ये। प्रशस्यः = श्लाघ्यः। प्रस्थापितः = प्रेषितः। विशदी-कृत्य = स्पष्टीकृत्य।

अरुणम् = लोहितम्, यत्, कौशेयस्य=पट्टवस्त्रस्य, जालम् = आनायः, तेन निबद्धौ = गृहीतौ। मीनाविवेत्यपमा। क्रोधान्नयने लोहिते अभूतामिति

---

अधिपति स्वप्रेषित सेनापति अपजल खाँ को सम्बोधित कर लिखते हैं—

"वीरवर, महाराष्ट्र के अधिपति शिवाजी के साथ लड़ने के लिए तुमने प्रस्थान किया है, इसलिए तुम्हारी विजय में किसी प्रकार की विघ्नबाधा उपस्थित न हो। यदि युद्ध में शिवाजी पर विजय पा लोगे तो मैं समझूँगा तुमने पैर से ही शेर को परास्त किया, किन्तु शेर को मारने की अपेक्षा जीवित शेर को वश करना ही अधिक प्रशंसनीय है। सो यदि छल से जीते शेर को यहाँ ले आओ, तो वीरपुंगव की उपाधि प्रदान कर साथ तुम्हारी बड़ी पदवृद्धि करूँगा। गोपीनाथ पण्डित को मैंने तुम्हारे पास भेजा है, वे मेरे अभिप्राय को स्पष्ट कर तुम्हें बतलाएँगे। किसी मतलब से शिवाजी से भी भेंट करेंगे।"

यह सुनते ही वीर शिवाजी के नेत्र लाल रेशमी जाल में फँसी हुई

मीनाविव नयने संजाते, मुखञ्च बाल-भास्कर-विम्ब-विडम्बनामाल-लम्बे, अधरश्च धीरताधुरामधरीकृतवान्।

अथ स दक्षिण-कर-पल्लवेन श्मश्रु परामृशन्नाकाशे दृष्टिं बद्ध्वा "अरे रे विजयपुर-कलङ्क! स्वयमेव जीवन् शिवः तव राजधानीमाक्रम्य, वीरपुङ्गवोपाधिसहकारेण तव महतीं पदवृद्धिमङ्गीकरिष्यति, तत्किं प्रेषयसि मृत्योः क्रीडनकानेतान् कदर्य्य-हतकान्?"—इति साम्रेडमवोचत्। अपृच्छच्च "ज्ञायते वा कश्चिद् वृत्तान्तो गोपीनाथपण्डितस्य?"

यावद् गौरसिंहः किमपि विवक्षति तावत्प्रतीहारः प्रविश्य,

---

वाच्योऽर्थः। बालभास्करस्य = नवोदितसूर्यस्य, यद्, बिम्बम् = नितान्तलोहितं मण्डलम्, तद्विडम्बनाम् = तदनुकृतिम्। आलम्बे = धृतवत्। धीरताधुराम् = धैर्यभारम्। "ऋक्पूरब्धू" रित्यादिना समासान्तोऽप्रत्ययः। अधरीकृतवान् = त्यक्तवान्। अनुप्रासः। चूर्णकं गद्यम्, वैदर्भी रीतिः, प्रसादश्च गुण इति तत्र तत्र न विस्मरणीयम्। शिवः = शिवाजीत्यर्थः। पदवृद्धि = स्थानोन्नतिम्, 'तरक्की' इति भाषायाम्। मृत्योः = यमस्य। क्रीडनकान् = खेलासाधनानि सन्निहितमरणानिति

---

मछली-से हो गये और मुखमण्डल नवोदित ( प्रातःकालीन ) सूर्यबिम्ब के सदृश लाल हो उठा और होंठने धैर्य का त्याग कर दिया ( ओठ फड़कने लगा )।

तदनन्तर वीर शिवाजी ने दाहिने करकमलसे मूँछों पर ताव देते हुए आकाश की ओर दृष्टि कर "अरे बीजापुर के कलङ्क, शिवाजी जीवित रह कर स्वयं ही तुम्हारे राज्य पर आक्रमण कर वीरपुङ्गवोपाधि के साथ तुम्हारी बड़ी पदवृद्धि ( तरक्की ) स्वीकार करेगा, काल के खिलौने इन दुष्ट कातरों को क्यों भेजते हो?" यह वाक्य दो तीन बार दुहराया और गौरसिंह से पूछा कि गोपीनाथ पण्डित का कुछ हाल-समाचार जानते हो?

गौरसिंह कुछ कहना ही चाहते थे, इतने में द्वारपाल ने आकर

"विजयतां महाराजः" इति त्रिर्व्याहृत्य, करौ संपुटीकृत्य, शिरो नमयित्वा कथितवान् "भगवन्! दुर्गद्वारि कश्चन गोपीनाथनामा पण्डितः श्रीमन्तं दिदृक्षुरुपतिष्ठते। नायं समयः प्रभूणां दर्शनस्य, पुनरागम्यताम्" इति बहुशः कथ्यमानोऽपि "किञ्चनात्यावश्यकं कार्यम्" इति प्रतिजानाति। तदत्र प्रभुचरणा एव प्रमाणम् इति।

तदवगत्य "सोऽयं गोपीनाथः, सोऽयं गोपीनाथः" इति साम्रेडं सतर्कं सोत्साहञ्च व्याहृतवत्सु निखिलेषु; शिववीरेण निजबाल्यप्रियो माल्यश्रीकनामा संबोध्य कथितो यद् "गम्यतां दुर्गान्तर एव महावीर-मन्दिरे तस्मै वासस्थानं दीयताम्, भोज्य-पर्यङ्कादि-सुखद-सामग्री-जातेन च सत्क्रियताम्, ततोऽहमपि साक्षात्करिष्यामि" इति।

ततो बाढमित्युक्त्वा प्रयाते माल्यश्रीके; "महाराज! आज्ञा चेदहमद्यैव अपजलखानं कथमपि साक्षात्कृत्य, तस्याखिलं व्यवसितं

---

यावत्। साक्षात्करिष्यामि = द्रक्ष्यामि। गोपीनाथमिति शेषः।

बाढम् = अङ्गीकारसूचकमव्ययम्। व्यवसितम् = उद्योगम्।

---

तीन बार 'महाराज की विजय हो' कह कर, हाथ जोड़कर, सिर झुका कर, कहा—"महाराज, किले के फाटक पर कोई गोपीनाथ नाम के पण्डित महाराज के दर्शनों की इच्छा से खड़े हैं। हम लोगों के बार बार "यह महाराज के दर्शनों का समय नहीं है, फिर कभी पधारिए" कहने पर भी कुछ अत्यावश्यक कार्य बतलाते हैं। प्रभुचरणों की जैसी आज्ञा हो, किया जाय।

यह जानकर 'वह गोपीनाथ यह है, वह गोपीनाथ यह है' यों दो तीन बार तर्क और उत्साह के साथ सबके कहने पर वीर शिवाजी ने अपने बाल सखा माल्यश्रीक को सम्बोधित कर कहा, "जाइए, किले के अन्दर ही महावीरजी के मन्दिर में उन्हें रहने के लिए स्थान दीजिये, भोजन पलंग आदि सुखद सामग्रियों से उनका सत्कार कीजिये, फिर मैं भी उनसे भेंट करूँगा।"

माल्यश्रीक के "अच्छी बात है" कह कर चले जाने पर गौरसिंह ने धीरे से शिवाजी के कान के निकट कहा—"महाराज यदि आज्ञा हो तो आज ही किसी प्रकार अपजल खाँ से भेंट कर उसका सारा अध्यवसाय

विज्ञाय प्रभुचरणेषु विनिवेदयामि । नाधुना मम क्षान्तिः शान्तिश्च, यतः संन्यासिवेषोऽहं समागच्छन् द्वयोर्यवनभटयोर्वार्तयाऽवागमम् ; यत् श्व एवैते युयुत्सन्ते" इति गौरसिंहो मन्दं कर्णान्तिकं व्याहार्षीत् ।

ततो "वीर ! कुशलोऽसि, सर्वं करिष्यसि, जाने तव चातुरीम् ; वद् यथेच्छं गच्छ, नाहं व्याहन्मि तवोत्साहम् , नीतिमार्गान् वेत्सि, किन्तु परिपन्थिन एते अत्यन्तनिर्दयाः, अतिकदर्याः, अतिकूटनीतयश्च सन्ति । एतैः सह परम-सावधानतया व्यवहरणीयम्"—इति कथयित्वा शिववीरस्तं विससर्ज ।

---

क्षान्तिः = क्षमा । कर्णान्तिकम्=श्रवणसमीपम् । असर्वश्रव्यमिति यावत् । चातुरीम् = कौशलम् । "गुणवचनब्राह्मणादिभ्य" इति ष्यञि अह्लोपयलोपयोः, षित्वान्ङीषि । व्याहन्मि = नाशयामि । परिपन्थिनः = शत्रवः । अत्यन्तं निर्दयाः=दयाशून्याः । अतिकदर्याः = परमनीचाः । "कदर्ये कृपणक्षुद्रे" त्यमरः । अतिकूटनीतयः = कपटाचारचतुराः । "माया निश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियामि" त्यमरः ।

---

( इरादा ) जान कर महाराज के चरणों में निवेदन करूँ । इस समय मुझमें न सहिष्णुता है और न शान्ति ही है, कारण कि जब मैं संन्यासी का वेष धारण कर आ रहा था तब मुझे दो मुसलमान सिपाहियों की बातचीत से मालूम हुआ है कि कल ही ये लड़ना चाहते हैं ।"

तदनन्तर वीर शिवाजी ने "वीरवर, तुम दक्ष हो, सब कुछ कर लोगे, मैं तुम्हारी चातुरी से अवगत हूँ, इसलिए अपने इच्छानुसार जाओ, मैं तुम्हारे उत्साह में बाधा नहीं डालता, तुम नीतिमार्गों को जानते हो, लेकिन ये शत्रु बड़े क्रूर, नीचतम और कपटाचरण में पटु हैं, इनके साथ बड़ी सावधानी से बर्ताव करना चाहिये" यह कह कर गौरसिंह को बिदा किया ।

गौरसिंहस्तु त्रिः प्रणम्य, उत्थाय, निवृत्य, निर्गत्य, अवतीर्य, सपदि तस्या एव निम्ब-तरु-तल-वेदिकायाः समीप आगत्य, स्वसहचरं कुमारमिङ्गितेनाऽऽहूय कस्मिंश्चित् स्वसंकेतित-भवने प्रविश्य, आत्मनः कुमारस्यापि च केशान् प्रसाधनिकया प्रसाध्य, मुखमार्द्रपटेन प्रोञ्छ्य, ललाटे सिन्दूर-बिन्दु-तिलकं विरचय्य, उष्णीषमपहाय, शिरसि सूचिस्यूतां सौवर्ण-कुसुम-लतादि-चित्र-विचित्रितामुष्णीषिकां संधार्य, शरीरे हरितकौशेय-कञ्चुकिकामायोज्य, पादयोः शोण-पट्ट-निर्मितमधोवसनमाकलय्य, दिल्लीनिर्मिते महार्हे उपानहौ धारयित्वा, लघीयसीं तानपूरिकामेकां सह नेतुं सहचर-हस्ते समर्प्य,

इङ्गितेन = सङ्केतेन। प्रसाधनिकया = कङ्कतिकया। "प्रसाधनी कङ्कतिके" त्यमर। "कंघी" इति हिन्दी। सौवर्णेन = सुवर्णविरचितेन, कुसुमलतादीनां चित्रेण, विचित्रिताम् = संवलिताम्। लघ्वुष्णीषमुष्णीषिका, ताम्। "टोपी" इति हिन्दी। शोणपट्टनिर्मितम् = रक्तकौशेयरचितम्। अधोवसनम् = अधोमार्गेण चरणेन धारणीयं वसनम्। "पायजामा" इति हिन्दी। दिल्लीशब्दो "दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" इत्यादौ पण्डितराजेनापि व्यवहृतः। महार्हे इत्यत्र 'ईदूदे' दित्यनेन प्रगृह्यत्वात् प्रकृतिभावो बोध्यः। तानपूर एव तानपूरिका। "तानपूरा" इति हिन्दी। सहेत्यस्य "आत्मने" ति शेषः। तानपूरिका-

गौरसिंह तीन बार प्रणाम कर, उठ कर, लौट कर, बाहर निकल कर, झटपट उसी नीम के तले के चौतरे के पास आकर अपने साथी बालक को इशारे से बुलाकर पहले से निश्चित अपने किसी एक भवन में प्रविष्ट होकर, अपने और कुमार के बालों पर कंघी फेर कर, गीले अँगौछे से मुँह पोंछ कर, भाल पर सिन्दूर की बिन्दी लगा कर, पगड़ी हटा कर, सूई से सिली सोने के तार के फूल, बेल-बूटे आदि के चित्रों से युक्त टोपी सिर पर पहन कर, बदन पर हरा रेशमी अंगरखा धारण कर, लाल रेशमी पायजामा ( पैरों की ओर से ) पहन कर, दिल्ली के बने बहुमूल्य जूते पहन कर, छोटे से एक तानपूरे को साथ ले जाने के लिए साथी

गुप्तच्छुरिकां दन्तावल-दन्त-मुष्टिकां यष्टिकां मुष्टौ गृहीत्वा, पटवासैर्दिगन्तं दन्तुरयन्, करस्थपटखण्डेन च मुहुर्मुहुराननं प्रोञ्छन् गायकवेषेण अपजलखान-शिविराभिमुखं प्रतस्थे।

अथ तौ त्वरितं गच्छन्तौ, सपद्येव परश्शत-श्वेतपट-कुटीरैः शारद-मेघ-मण्डलायितं दीपमाला-विहित-बहुल-चाकचक्यम् अपजलखान-शिविरं दूरत एव पश्यन्तौ, यावत्समीपमागच्छतस्तावत् कश्चन कोकनद-च्छवि-वस्त्र-खण्ड-वेष्टितमूर्द्धा, कटिपर्यन्त-सुनद्ध-काक-श्यामाङ्गरक्षिकः, कर्बुराधोवसनः, शोण-श्मश्रुः, विजय-

शब्दस्य तु न सहशब्देन विशेष्यविशेषणभाव एवेति न तत्र तृतीयाऽऽशंका। दन्तावलस्य = करिणः, दन्तः मुष्टिका यस्यां ताम्। दन्तेन निर्मितेति मध्यमपदलोपिसमासो वा। "हाथी दाँत की मूठवाली गुप्ती छड़ी" इति भाषा। पटवासैः = सुगन्धितद्रव्यैः। "इत्र" इति हिन्दी। दन्तुरयन् = उन्नतयन्, सुगन्धयन्निति तात्पर्यम्। करस्थपटखण्डेन = हस्तस्थयाऽङ्गावलक्ष्या। "दस्ती रुमाल" इति हिन्दी।

शारदमेघमण्डलायितम् = शरत्समयमेघमण्डलमिवाऽऽचरितम्। शुभ्रत्वादुन्नतत्वाच्च सादृश्यम्। कोकनदच्छविना = रक्तकमलकान्तिना, वस्त्रखण्डेन = वेष्टितो मूर्धा यस्य सः। कटिपर्यन्ता सुनद्धा काकश्यामा = अतिश्यामला, अङ्गरक्षिका यस्य सः। कर्बुरम् = अनेकवर्णम्, अधोवसनं यस्य सः। शोणश्मश्रुः = रक्तमुखकेशः। विजय-

बालक के हाथ दे कर और हाथ में हाथी के दाँत की मूठवाली गुप्ती छड़ी लेकर इत्र की महँक से दिगन्तों को सुगन्धित करते हुए एवं हाथ में लिए रूमाल से बार बार मुँह पोंछते हुए गायक के वेष से अपजल खाँ के शिविर की ओर रवाना हुए।

जल्दी जल्दी कदम बढ़ा रहे वे दोनों सैकड़ों खेमों से शरत् ऋतु के मेघमण्डल-से प्रतीत हो रहे, दीपमालिकाओं से खूब जगमगा रहे अपजल खाँ के शिविर को दूर से देखते हुए बात की बात में ज्यों ही पास पहुँचे, तो लाल कमल की-सी कान्तिवाले वस्त्र का टुकड़ा सिर पर लपेटे, कमर तक लम्बी खूब काली अँगरखी बाँधे, चितकबरी लुंगी पहने, लाल

पुराधीश–नामाङ्कित–वर्तुल–पित्तल–पट्टिका–परिकलित–वाम–वक्षः–स्थलः, स्कन्धे भुशुण्डीं निधाय, इतस्ततो गतागतं कुर्वन् सावष्टम्भमुर्दूभाषया उवाच–"कोऽयं कोऽयमिति ?"। ततो गौरसिंहेनापि "गायकोऽहं श्रीमन्तं दिदृक्षे" इति समार्दवं व्याख्यायि। ततो "गम्यतामन्येऽपि गायका वादकाश्च सम्प्रत्येव गताः सन्ति" इति कथयति प्रहरिणि, "घृतेन स्नातु भवद्रसना" इति व्याहरन् शिबिर–मण्डलं प्रविवेश।

तत्र च क्वचित् खट्वासु पर्यङ्केषु चोपविष्टान्, सगडगडाशब्दं ताम्रक–धूमसाकृष्य, मुखात् कालसर्पानिव श्यामल–निश्वासानु-

---

पुराधीशनाम्नाऽङ्कितया=तन्नामधेयेन चिह्नितया, वर्तुलया=गोलाकारया, पित्तलपट्टिकया = धातुफलकिकया, लोके "चपरास" इति ख्यातया, परिकलितम् = भूषितम् , वामम् वक्षःस्थलं यस्य सः। सावष्टम्भम् = सप्रतिरोधम्। समार्दवम् = सकोमलतम्। व्याख्यायि = कथितम्। घृतेन स्नातु भवद्रसनेति, "आपके मुँह में घी चीनी" इत्यर्थकलोकप्रवादकथनम्। अत एव लोकोक्तिरलंकारः।

तत्र चेत्यारभ्य प्रधानपटकुटीरद्वारमाससादेत्येकान्वयि। ताम्रकम् =

---

लाल मूँछ दाढ़ी वाले, बीजापुर के अधिपति के नाम से अंकित गोल पीतल की चपरास छाती की बाँई ओर डाले किसी आदमी ने, जो कन्धे पर बन्दूक रक्खे इधर-उधर गश्त लगा रहा था, उन्हें टोक कर उर्दू में कहा—"कौन है, यह कौन है"।

उसके बाद गौरसिंह ने भी बड़ी नर्मी से कहा—"मैं गायक हूँ, श्रीमान् सेनापतिजी से मिलना चाहता हूँ।" तदनन्तर द्वारपाल के "जाइए, और भी बहुत से गायक और वादनकलाकोविद अभी अभी गये हैं" यों कहने पर "आपके मुँह में घी चीनी" यों आशीर्वाद देकर वे शिविर में प्रविष्ट हुए।

वहाँ उन्होंने देखा कहीं पर खटिया और पलंगों पर बैठकर गड़गड़ ध्वनि के साथ तम्बाकू का धुआँ खींच कर कुछ लोग मुँह से काले सर्पों की नाईं काली साँस छोड़ रहे थे, मानो अपने

द्विरतः, स्वहृदय–कालिमानमिव प्रकटयतः, स्वपूर्वपुरुषोपार्जित–पुण्यलोकानिव फूत्कारैरग्निसात् कुर्वतः, मरणोत्तरमतिदुर्लभं मुखाग्निसंयोगं जीवन–दशायामेवाऽऽकलयतः, प्राप्ताधिकारकलिताखर्वगर्वान्; क्वचिद् "हरिद्रा हरिद्रा, लशुनं लशुनम, मरिचं मरिचम्, चुक्रं चुक्रम्, वितुन्नकं वितुन्नकम्, शृङ्गवेरं शृङ्गवेरम्, रामठं रामठम्, मत्स्यण्डी मत्स्यण्डी, मत्स्या मत्स्याः, कुक्कुटाण्डं कुक्कु-

"तमाखू" इति हिन्दी। ताम्रकधूमनिश्वासस्य स्वत एव श्यामलस्य मुखादुद्वमितस्य कालसर्पत्वेनोत्प्रेक्षा। यथैन्द्रजालिका जनान्मोहयितुमाननात् कृष्णान् सर्पानुद्वमन्ति तथैवैते शिववीरमोहनाय स्थिता इत्युपमालंकारस्य व्यङ्ग्यत्वेन वस्त्वलङ्कारध्वनिः। अन्यथोत्प्रेक्षते स्वहृदयस्य कालिमानमिवं। पुनरप्युत्प्रेक्षते-स्वपूर्वपुरुषैः = अन्वयमूलभूतैः, उपार्जितान् = संचितान्, पुण्यलोकान् = स्वर्गादिकान्। अग्निसात् = वह्न्यधीनीभूतान्। दहत इति भावः। ताम्रकधूमाकर्षणमग्निसंस्कारत्वेनोत्प्रेक्षते–मरणादुत्तरम् = देहत्यागानन्तरम्। प्राप्तेन = लब्धेन, अधिकारेण = स्वाम्येन, अखर्वः = बहुलीभूतः, गर्वः = अभिमानो येषां तान्। हरिद्रा = महारजनम्। "निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी"त्यमरः। संभ्रमे द्विरुक्तिः। चुक्रम् = वृक्षाम्लम्। "तिन्तिडीकञ्च चुक्रञ्च वृक्षाम्लमि"त्यमरः। "चूक" इति हिन्दी। वितुन्नकम् = छत्रा। "अथ च्छत्रा वितुन्नकमि"त्यमरः। "सौंफ" इति हिन्दी। शृङ्गवेरम् = आर्द्रकम्। "आर्द्रकं शृंगवेरं स्यादि"त्यमरः। "आदी" इति हिन्दी। रामठम् = हिङ्गु। मत्स्यण्डी = फाणितम्। "राब" इति

हृदय की कालिमा प्रकट कर रहे थे, मानो अपने पूर्वजों द्वारा उपार्जित स्वर्गादि पुण्य लोकों को फूँक मार कर जला रहे थे, मानो मरने के बाद भी प्राप्त न होनेवाला मुखका अग्निसंयोग जीवनावस्था में ही कर रहे थे, अधिकारारूढ़ होने से घमंड में चूर थे, कहीं पर रसोइये हल्दी-हल्दी, लहसुन-लहसुन, मरिच-मरिच, खटाई-खटाई, सौंफ-सौंफ, अदरख-अदरख, हींग-हींग, राब-राब, मछली-मछली, मुर्गीके अण्डे-मुर्गी के अण्डे, मांस-मांस के होहल्ले से बच्चों की नींद

टाण्डम्, पललं पललम्' इति कलकलैर्बालानां निद्रां विद्रावयतः, समीप-संस्थापित-कुतू-कुतुप-कर्करी-कण्डोल-कट-कटाह-कम्बि-कडम्बान्, उग्रगन्धीनि मांसानि शूलाकुर्वतः, नखम्पचा यवागूः स्थालिकासु प्रसारयतः, हिङ्गुगन्धीनि तेमनानि तिन्तिडीरसैर्मिश्र-यतः, परिपिष्टेषु कलम्बेषु जम्बीर-नीरं निश्च्योतयतः, मध्ये मध्ये

हिन्दी। कुक्कुट्या अण्डं कुक्कुटाण्डम्। "कुक्कुट्यादीनामण्डादिष्वि"ति पुंवत्त्वम्, पललम् = मांसम्। विद्रावयतः = दूरयतः। कुतूः = चर्मनिर्मितं तैलाद्याधारपात्रम्। कुतुपः = सैव लघुः। "कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमानि"त्यमरः। कर्करी = हस्तप्रक्षालनादियोग्यं पात्रम्। "कर्कर्यालुर्गलन्तिके" त्यमरः। "करवा" "गड्डुवा" इति हिन्दी। यवनानां "बधना" इति। कण्डोलः = पिटः। वेणुदलादिरचितो भाण्डविशेषः। "बांसकी पिटारी" इति हिन्दी। कटः = किलिञ्जकः। कटाहः = शष्कुल्यादिपाकपात्रम्। "कढायी" इति भाषायाम्। कम्बिः = दर्विः। "कलछी" इति हिन्दी। कडम्बः = कलम्बः। शूलेन = लोहशलाकया संस्कुर्वतः शूलाकुर्वतः। "शूलात्पाके" इति डाच्। नखम्पचन्ति यास्ता नखम्पचाः। यवागूः = तरलाः। "यवागूरुष्णिका धाना विलेपी तरला च से"त्यमरः। हिङ्गुनो गन्धो येषु तानि हिङ्गुगन्धीनि। "अल्पाख्यायामि"-ति गन्धस्येकारः। "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरि"त्यमरः। तेमनानि = व्यञ्जनानि। तिन्तिडीरसैः = चुक्ररसैः। मिश्रयतः = संयोजयतः। अत्र विशेष्यविशेषणाभ्यां "कढी" इति ख्यातस्य ग्रहणम्। कलम्बेषु = वास्तूकादिशाकदण्डेषु। "अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका। कलम्बश्च कडम्बश्चे"त्यमरः। "पिसी हुई चटनी में" इति

हराम कर रहे थे, उन्होंने कुप्पा, कुप्पी, करवा, ( गड़वी ), टोकरी, चटाई, करछुल और शाक के डण्ठल सामने रख छोड़े थे, दुर्गन्धवाले मांसखण्डों को लोहे की सीकों में पिरोकर पका रहे थे, गरम गरम गीला भात परातों में पसार रहे थे, हींग से बघारी हुई कढी में इमली का रस मिला रहे थे, पीसी हुई चटनी में नीबू का रस निचोड़ रहे थे,

समागच्छतस्ताम्रचूडान् व्यजन-ताडनैः पराकुर्वतः, त्रपु-लिप्तेपु ताम्र-भाजनेषु आरनालं परिवेषयतः सूदान्; कचिद्वक्र-प्रसाधित-काकपक्षान्, मद-व्याघूर्णित-शोण-नयनान्, सपारस्परिक-कण्ठग्रहं पर्य्यटतः, यौवन-चुम्बित-शरीरान्, स्वसौन्दर्य-गर्व-भारेणेव मन्द-गतीन्, अनवरताऽऽक्षिप्त-कुसुमेषु-बाणैरिव कुसुमैर्भूषितान्, वसना-तिरोहिताङ्गच्छटान्, विविध-पटवास-वासितानपि चिरास्नान-

हिन्दी। निश्च्योतयतः = क्षारयतः। ताम्रचूडान् = कुक्कुटान्। त्रपु-लिप्तेषु = "कलई किए हुवे" इति हिन्दी। आरनालम् = काञ्जिकम्। "आरनालकसौवीरकुल्माषाभिषुतानि च। काञ्जिक" इत्यमरः। सूदान् = पाचकान्। वक्रम् यथा तथा प्रसाधिताः = स्फालिताः, काकपक्षाः = कुञ्चितकचाः "काकुल"इति हिन्दी, यैस्तान्। मदेन व्याघूर्णितानि शोणानि नयनानि येषां तान्। पारस्परिकेन = आन्योन्येन, कण्ठग्रहेण = गलधारणेन सहितं यथा स्यात्तथेति क्रियाविशेषणम्। यौवनेन = नववयसा, चुम्बितानि = सम्बद्धानि, शरीराणि येषां तान्। चुम्बितपदं लक्षणया सम्बद्धबोधकम्। वक्त्रसंयुक्तरूपस्य मुख्यार्थस्य बाधात्। स्वभावतो मन्दाया गतेर्निमित्तमुत्प्रेक्षते-स्वसौन्दर्यस्य गर्वभारेणेवेति। कुसुमभूषितेषु तेषु कुसुमानि कुसुमेषुधनुर्निपतितानीत्युत्प्रेक्षते—अनवरतम् = सततम्, आक्षिप्ताः = पातिताः, कुसुमेषुबाणाः = कामशराः, येषु तान्। वसनैः = वस्त्रैः, अतिरोहिता, अङ्गच्छटा येषां तान्। विविधैः, पटवासैर्वासितानपि, चिरास्नानेन = अत्यधिककालतो देहानिर्णेजनेन, महामलिनस्य =

बीच बीच में आ रहे मुर्गों को पङ्खों की मारसे हटा रहे थे, कलई किये तांबे के बर्तनों में कांजी परोस रहे थे, कहीं पर तिरछी संवारी हुई जुल्फों वाले यवन युवक, जिनके नेत्र नशे से अस्थिर और लाल थे, जवानी उभर चली थी, मानो सौन्दर्यके गर्व के भार से चाल मन्द थी, अङ्गच्छवि वस्त्रों से तिरोहित न थी, जो निरन्तर गिरे हुए कामबाणरूपी पुष्पों से अलंकृत थे, परस्पर गले में बाँह डालकर घूम रहे थे, भाँति भाँति के इत्रों से सुगन्धित होते हुए भी वे चिरकाल से स्नान न करने के कारण

महा–मलिन–महोत्कट–स्वेद–पूतिगन्ध–प्रकटीकृतास्पृश्यतान् यवन–युवकान्;

क्वचिद् "अहो! दुर्गमता महाराष्ट्रदेशस्य, अहो! दुराधर्षता महाराष्ट्राणाम्, अहो! वीरता शिववीरस्य, अहो! निर्भयता एतत्सेनानीनाम्, अहो! त्वरितगतिरेतद्घोटकानाम्, आः! किं कथयामः? दृष्ट्वैव चमत्कारं शिववीर–चन्द्रहासस्य न वयं पारयामो धैर्यं धर्तुम्, न च शक्नुमो युद्ध–स्थाने स्थातुम्, को नाम द्विशिरा यः

---

अत्यन्तं मलीमसस्य, महोत्कटस्य = अत्युग्रस्य, स्वेदस्य = घर्मवारिणः, पूतिगन्धेन = दौर्गन्ध्येन, प्रकटीकृता = व्यक्तीकृता, अस्पृश्यता = स्पर्शायोग्यता, यैस्तान्।

क्वचिद् व्याहरत इति द्वितीयान्तेन सम्बन्धः। व्याहरणं कथयति-अहो इति। पुनः पुनः सम्भवति सम्ब्रोभवीति, अतिशयेन सम्ब्रोभवीति सम्बोभवीतितमाम्। "वर्त्तमानसामीप्ये वर्त्तमानवद्वे"ति लट्। भ्रूकुंसकः = स्त्रीवेषधारी नर्त्तकः। भ्रुवोः कुंसः = भाषणम्, भ्रुवा कुंसः = शोभा वा यस्य सः। दुराधर्षता = दुरभिभवनीयता। द्वे शिरसी यस्यासौ द्विशिराः, छिन्नमस्तक इत्यर्थः। एवम्भूत एव हि परितः प्रसृतान् तदीयान् भटान् छलयन् रहस्यमाख्यातुमर्हति य उभयतोदृष्टिर्भवेदिति तत्त्वम्। द्वे पृष्ठे

---

महामैले अत्यधिक पसीने की बदबू से अपनी अस्पृश्यता को व्यक्त कर रहे थे।

कहीं पर सैनिक लोग कह रहे थे "ओह! महाराष्ट्र देश अति दुर्गम है, ओह मरहट्टों को नीचा दिखाना हंसी-ठट्टा नहीं है, बापरे बाप वीर शिवाजी की वीरता अद्भुत है!! इनके सेनापति बड़े निडर हैं, इनके घोड़ों की तेजी विस्मय में डालने वाली है। आह क्या कहें, वीर शिवाजी की तलवार की चमकदमक देखकर ही हमारे छक्के छूट जाते हैं, समर भूमि में टिकना हमारे लिए मुश्किल हो जाता है। कौन दो सिर वाला

शिवेन योद्धुं गच्छेत् ? कश्च नाम द्विपृष्ठो यस्तद्भटैरपि छलालापं विदध्यात् ? वयं बलिनः, आस्माकीना महती सेना, तथाऽपि न जानीमः किमिति कम्पत इव क्षुभ्यतीव च हृदयम् ? 'यवनानां पराजयो भविष्यति, अपजलखानो विनङ्क्ष्यती'ति न विद्मः को जपतीव कर्णे ? लिखतीव सम्मुखे, क्षिपतीव चान्तःकरणे। मा स्म भोः ! मैवं स्यात्, रक्ष भो ! रक्ष, जगदीश्वर ! अथवा सम्बोभवीतितमामेवमपि, योऽयमपजलखानः सेनापति-पद-विडम्बनोऽपि 'शिवेन योत्स्ये हनिष्यामि ग्रहीष्यामि वे'ति सप्रौढि विजयपुराधीश-महासभायां प्रतिज्ञाय समायातोऽपि, शिवप्रतापञ्च विदन्नपि, अद्य नृत्यम्, अद्य गानम्, अद्य लास्यम्, अद्य मद्यम्, अद्य वाराङ्गना, अद्य भ्रूकुंसकः, अद्य वीणावादनमिति स्वच्छन्दैरुच्छृङ्खला-

---

यस्यासौ द्विपृष्ठः, यस्य पृष्ठद्वयं भवेत् स एव तद्भटेन छलं कुर्यात्, नतु साधारण इति भावः। जपतीव = मन्दं कथयतीव। इवेन न वास्तवो जप

---

होगा जो शिवाजी से जूझने जायगा, कौन दो पीठ वाला होगा जो उनके सैनिकों के साथ भी छलछन्द की बात चलायेगा ? सचमुच हम बलवान् हैं, हमारी सेना भी बहुत बड़ी है, फिर भी न मालूम क्यों हृदय काँपता-सा है, क्षुब्ध-सा होता है। 'यवनों की हार होगी, अपजल खाँ मारा जायगा' यों न मालूम कौन कान में धीरे से कह-सा रहा है, सामने लिख-सा रहा है, अन्तःकरण में दृढ़ संस्कार डाल-सा रहा है ! अरे ऐसा कभी न हो, हे भगवान् रक्षा कीजिये, हे जगदीश्वर बचाइये ! अथवा ऐसा होना भी कोई बड़ा असंभव नहीं है, कारण कि सेनापति-पद का मख़ौल करनेवाला यह अपजल खाँ यद्यपि 'मैं शिवाजी से लड़ूँगा, उसे मारूँगा अथवा कैद करूँगा' यों बीजापुर के नरेश की सभा में लम्बी डींग हांक आया है और शिवाजी के पराक्रम को भी अच्छी तरह जानता है, तथापि आज नाच है तो आज गाना है, आज श्रृङ्गार प्रधान स्त्री-नृत्य है तो आज मदिरा है, आज वेश्या है तो आज स्त्रीवेष-धारी नर्तक है, आज सितार वादन है—इस तरह स्वच्छन्द उच्छृङ्खल असदा-

ऽऽचरणैर्दिनानि गमयति। न च यः कदापि विचारयति ; यत् कदाचित् परिपन्थिभिः प्रेषिता काचन वार-वधूरेव मामासवेन सह विषं पाययेत्, कोऽपि नट एव ताम्बूलेन सह गरलं ग्रासयेत्, कोऽपि गायक एव वा वीणया सह खड्गमानीय खण्डयेदित्यादि। ध्रुव एव तस्य विनाशः, ध्रुवमेव पतनम्, ध्रुवमेव च पशुमारैर्मरणम्। तन्न वयं तेन सह जीवन-रत्नं हारयिष्यामः"—इति व्याहरतः ; इतरांश्च—

"मैवं भोः! श्व एव आहव-क्रीडाऽस्माकं भविष्यति, तत् श्रूयते सन्धि-वार्त्ता-व्याजेन शिव एकत आकारयिष्यते, यावच्च स स्वसेनामपहाय एकाकी अस्मत्स्वामिना सहाऽऽलपितुमेकान्तस्थाने यास्यति; तावद्वयं श्येना इव शकुनिमण्डले महाराष्ट्र-सेनायां, छिन्धि

इति सूचितम्। आसवेन=मद्येन। जीवनरत्नम्=श्रेष्ठं जीवनम्। रत्नशब्दः श्रेष्ठवाची। "रत्नं स्वजातिश्रेष्ठेऽपी"त्यमरः। इतरांश्च कर्णान्तिकं मुखमानीयोत्तरयत इति सम्बन्धः। उत्तरं प्रदर्शयति मैवमिति। आहवः=संग्रामः, स एव क्रीडा। श्येना इव=बाजपक्षिण इव। शकुनिमण्डले=पक्षि-

चरणों से दिन बिता रहा है। इसे कभी यह विचार नहीं होता कि कहीं शत्रुओं द्वारा प्रेषित कोई वेश्या ही मुझे शराब के साथ विष पिला दे, कोई नट ही पान के साथ विष दे दे, कोई गायक ही वीणा के साथ खड्ग लाकर मेरा काम तमाम कर दे! उसका विनाश अवश्यम्भावी है, उसके पतन में कोई सन्देह नहीं है और पशुओं की भाँति मरण भी ध्रुव है। इसलिए हम उसके साथ अपना बहुमूल्य जीवन नहीं गँवाएँगे।"

अन्य लोग कान के पास मुँह ले जाकर उनको यों उत्तर दे रहे थे—"ऐं ऐसा मत कहो, कल ही हम लोगों की युद्धक्रीड़ा आरंभ होगी। सुनते हैं सन्धि की बातचीत के बहाने शिवाजी एक ओर बुलाए जाएँगे। ज्यों ही वह अपनी सेना छोड़ कर अकेले हमारे स्वामी के साथ वार्तालाप करने के लिए एकान्त स्थान में जायंगे, त्यों ही हम लोग जैसे बाज पक्षियों के झुण्ड पर झपटता है वैसे ही मरहट्ठों की सेना पर मारकाट

भिन्धि—इति कृत्वा युगपदेव पतिष्यामः, वसन्त-वाताहत-नीरस-च्छदानिव च क्षणेन विद्रावयिष्यामः। इतस्तु छलेनास्मत्स्वामिसहचराः शिवं पाशैर्बद्ध्वा पिञ्जरे स्थापयित्वा तं जीवन्तमेव वशंवदं करिष्यन्ति। परन्तु गोप्यतमोऽयं विषयो मा स्म भूत् कस्यापि कर्णगतः"—

इति कर्णान्तिकं मुखमानीयोत्तरयतः सांग्रामिकभटानवलोकयन्, "धन्या भवन्तो येषां गोप्यतमा अपि विषया एवं वीथिषु विकीर्यन्ते। महाराष्ट्रा धूर्ताचार्याः, नैतेषु भवतां धूर्तता सफला भवति" इत्यात्मन्येवाऽऽत्मना कथयन्, स्व-प्रभा-धर्षित-सकल-रक्षकगणः स्वसौन्दर्येणाऽऽकर्षयन्निव विश्वेषां मनांसि, सपद्येव प्रधान-पट-कुटीर-द्वारमाससाद। तत्र च प्रहरिणमालोकयदुक्तवांश्च यत् पुण्यनगर-निवासी गायकोऽहमत्रभवन्तं गान-रस-रसायनै-

समूहे। वसन्तवातेन, आहतान्, अत एव नीरसान् = रसरहितान्, छदानिव = पत्राणीव। उपमा। वशं वदतीति वशंवदस्तम्। "प्रियवशे वदः खजि"ति खच्। आकर्षयन् = वशीकुर्वन्। वीणाया आव-

मचाते हुए एकबारगी टूट पड़ेंगे, एक क्षण में वसन्त (पतझड़) ऋतु की हवा से गिरे सूखे पत्तोंकी नाईं उसे भगा डालेंगे। इधर छल से हमारे स्वामी के अनुचर शिवाजी को रस्सों से बाँध कर, पिंजड़े में बन्द कर जीतेजी अपने आयत्त करेंगे। किन्तु यह विषय अति गोपनीय है, किसी के कान में न पड़े।" इस प्रकार कान में मुँह सटा उत्तर देते हुए भटों को देख—

"आप लोग धन्य हैं जिनके अति गोपनीय विषय भी इस प्रकार गलियों में फैलाये जाते हैं, मरहट्ठे तो परले सिरे के धूर्त हैं, इन पर आप लोगों की धूर्तता सफल न होगी" यों मन ही मन कहते हुए अपनी प्रभासे सब पहरेदारों को अप्रतिभ कर अपनी सुन्दरता से सबके मनको अपनी ओर आकृष्ट करते हुए तानरंग तुरन्त ही प्रधान खेमे के दरवाजे पर पहुँच गये। वहाँ पर तैनात पहरेदार को देखा और उससे कहा—"मैं पूने का रहनेवाला गायक हूं, श्रीमान् सेनापतिजी को गान-रसरूपी रसायनों से आह्लादित करना चाहता हूँ।"

रमन्दमानन्दयितुमिच्छामीति। तदवगत्य स भ्रूसंचारेण कञ्चित् निवेदकं सूचितवान्। स चान्तः प्रविश्य, क्षणानन्तरं पुनर्बहिर्निर्गत्य गायकमपृच्छत्—'किं नाम भवतः? पूर्वञ्च कदाऽपि समायातो न वा?' अथ स आह—'तानरङ्गनामाऽहं कदाचन युष्मत्कर्णमस्पृशम्। न पूर्वं कदाऽपि समात्रोपस्थातुं संयोगोऽभूत्, अद्य भाग्यान्यनुकूलानि चेच्छ्रीमन्तमवलोकयिष्यामि' इति। स च 'आम्' इत्युदीर्य पुनः प्रविश्य क्षणानन्तरं निर्गत्य च, विचित्र–गायकममुं सह निनाय।

तानरङ्गस्तु तेनैव तानपूरिका–हस्तेन बालकेनानुगम्यमानः, शनैः शनैः प्रविश्य, प्रथमं द्वितीयं तृतीयञ्च द्वारमतिक्रम्य, कांश्चिन् मृदङ्ग–स्वरान् सन्दधतः; कांश्चिद्वीणावरणमुन्मुच्य, प्रवालं प्रोञ्छ्य, कोणं कलयतः; कांश्चिदविचलोऽयमेतेनैव सह योज्यन्तामपरवाद्या-

रणम् = आच्छादनवस्त्रम्। प्रवालम् = वीणादण्डम्। "वीणादण्डः प्रवालः स्यादि"त्यमरः। कोणम् = वादनोपयोगिनमुपकरणविशेषम्। "मिजराफ"

उनका भाव समझ कर उसने भौंहों के इशारे से एक सन्देशवाहक को सूचित किया। उसने भीतर जाकर क्षण भर में फिर बाहर आकर गायक से पूछा, आपका क्या नाम है? पहले भी कभी आये हैं या नहीं? उन्होंने कहा मेरा नाम तानरंग है, शायद कभी मेरा नाम आपके कानों में पड़ा हो। मुझे पहले कभी यहाँ उपस्थित होनेका अवसर नहीं मिला, आज यदि भाग्य ने साथ दिया तो श्रीमान् के दर्शन करूँगा। वह अच्छा कह कर भीतर गया और क्षण भर में बाहर निकल कर इस विलक्षण गायक को साथ ले गया।

तानरङ्ग ने, जिनके पीछे तानपूरा हाथ में लिये वही बालक चल रहा था, धीरे धीरे प्रविष्ट होकर पहली, दूसरी और तीसरी ड्योढ़ी पार कर देखा कि कोई मृदङ्ग के स्वर साध रहे हैं तो कोई सितार का गिलाफ उतार कर और उसके दण्ड को पोंछकर मिजराफ पहन रहे हैं, कोई यह अविचल स्वर है, इसीके साथ अन्य बाजों का मिलान करो यों

नीति वंशीरवं साक्षीकुर्वतः ; कांश्चित् कलित-नेपथ्यान् , पादयोर्नूपुरं बध्नतः; कांश्चित् स्कन्धावलम्बिगुटिकातः करतालिकामुत्तोलयतः; कांश्चिच्च कर्णे दक्षकरं निधाय, चक्षुषी सम्मील्य, नासामाकुञ्च्य, पातितोभयजानु उपविश्य, वामहस्तं प्रसार्य, तन्त्रीस्वरेण स्व-काकलीं मेलयतः; सम्मुखे च पृष्ठतः पार्श्वतश्चोपविष्टैः कैश्चित् ताम्बूल-वाहकैः, अपरैर्निष्ठ्यूतादान-भाजन-हस्तैः, अन्यैरनवरत-चलित-चामरैः, इतरैर्बद्धाञ्जलिभिर्लालाटिकैः परिवृतम् , रत्नजटितोष्णीषिका-मस्तकम् , सुवर्ण-सूत्र-रचित-विविध-कुसुम-कुड्मल-लता-प्रताना-

---

इति हिन्दी। साक्षीकुर्वतः=साक्षाद्दर्शितां नयतः। इतरवाद्यसत्यतायै प्रमाणतां प्रापयत इति यावत् । करतालिकाम्="करताल" इति हिन्दी। काकलीम्=सूक्ष्मं कलम्। 'ईषदर्थेचेति' कोः कादेशः, गौरादित्वात् ङीष्। "काकली तु कले सूक्ष्म" इत्यमरः। निष्ठ्यूतादानम्=पतद्ग्रहः। "पीकदान" इति हिन्दी। लालाटिकैः=अधिपतिभालमात्रावलोकनक्षमैर्न तु कार्यसम्पादकैः। "लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः" इत्यमरः। सुवर्णसूत्रेण=सूक्ष्मतमसुवर्णतन्तुना, "कलाबत्तू" इति हिन्दी, रचिता या विविधाः=अनेकप्रकाराः, कुसुमकुड्मललताः=पुष्पकलिकावल्ल्यः, तासां प्रतानैः=विततनैः, अङ्कितः=अञ्चितः,

---

मुरली-ध्वनि को सब बाजे ठीक बज रहे हैं या नहीं, इस विषय में प्रमाण बना रहे, तो कोई वेषभूषा से सुसज्जित हो पैरों पर पायजेब पहन रहे हैं, कोई कन्धे पर लटक रही झोली से करताल निकाल रहे हैं, तो कोई कान पर दाहिना हाथ रख, आँखें मींच, नाक सिकोड़, दोनों घुटनों के बल जमीन पर बैठकर, बाँए हाथ को फैला कर वीणा के स्वर के साथ अपने सूक्ष्म कलगान का मिलान कर रहे हैं और सामने अपजल खाँ को देखा, वह पीछे और अगल-बगल बैठे हुए लोगों से, जिनमें कोई पानदान लिए थे, कोई पीकदान पकड़े थे, कोई निरन्तर चँवर डुला रहे थे और कुछ चापलूसी में ही पारंगत हाथ जोड़े मुँह ताक रहे थे, परिवृत था। उसके सिर पर रत्नजटित टोपी थी, बदन पर सोने के तारों से काढ़े विचित्र फूल, बेल-बूटों वाला चपकन था, एक

ङ्कित-कञ्चुकं महोपबर्हमेकं क्रोडे संस्थाप्य, तदुपरि सन्धारितभुज-द्वयम्, रजत-पर्य्यङ्के विविध-फेन-फेनिल-क्षीरधि-जल-तल-च्छवि-मङ्गीकुर्वत्यां तूलिकायामुपविष्टमपजलखानं च ददर्श।

ततस्तु तानरङ्ग-प्रभा-वशीभूतेषु सर्वेषु 'आगम्यतामागम्यतामास्यतामास्यताम्' इति कथयत्सु, तानरङ्गोऽपि सादरं दक्षिण-हस्तेनाऽऽदरसूचक-सङ्केत-सहकारेण यथानिर्दिष्टस्थानमलञ्चकार।

ततस्तु इतरगायकेषु सगर्वं सासूयं सक्षोभं साक्षेपं सचक्षुर्विस्फारणं सशिरःपरिवर्तनं च तमालोकयत्सु अपजलखानेन सह तस्यैवसभूदालापः ।

---

कञ्चुकः = निचोलो यस्य तम् । महोपबर्हम् = महोपधानम् । "मसनन्द" इति हिन्दी । विविधफेनेन = प्रचुरडिण्डीरेण, फेनिलस्य = फेनसंवलितस्य, क्षीरधेः = वारिधेः, जलतलस्य छविम् = शोभाम्, अङ्गीकुर्वत्याम् = धारयन्त्याम् । तूलमस्ति यस्यां सा तूला = तूलवती, तूलैव तूलिका = तूलमयो विष्टरः, तस्याम् । "रूई की गद्दी, तोसक" इति हिन्दी । कूर्चापर्यायत्वमनुचिन्तयन्तस्तु चिन्तनीयबुद्धय एवेति शम् ।

आदरसूचकसंकेतः = "सलाम" इति हिन्दी ।

---

विशाल मसनद को गोद में रखकर उसके ऊपर दोनों बाहुओं का भार देकर चाँदी के पलंग के ऊपर प्रचुर फेन से फेनिल समुद्र की सतह की शोभा को मात कर रहे तोषक पर वह बैठा था ।

तानरंग की चमक-दमक से सबके मन्त्रमुग्ध-से हो "आइये, आइये, बैठिये-बैठिये" कहने पर तानरंग ने आदरपूर्वक दाहिने हाथ से सत्कार करते ( सलाम करते ) हुए निर्दिष्ट आसन अलंकृत किया ।

अन्य गायकों के गर्व, ईर्ष्या झुंझलाहट, निंदा के साथ आँखे फाड़ कर और सिर हिलाकर तानरंग को देखने पर अपजल खाँ के साथ उनका इस तरह वार्तालाप हुआ ।

अपजलखानः—किन्देशवास्तव्यो भवान् ?

तानरङ्गः—श्रीमन् ! राजपुत्रदेशीयोऽहमस्मि ।

अपजल०—ओः ! राजपुत्रदेशीयः ?

तान०—आम् ! श्रीमन् !

अप०—तत् कथमत्र महाराष्ट्र-देशे ?

तान०-सेनापते ! मम देशाटन-व्यसनं मां देशाद्देशं पर्याटयति ।

अप०—आ ! एवम् ! तत्किं प्रायः पर्य्यटति भवान् ?

तान०—एवं चमूपते !, नव्यान् नव्यान् देशानवलोकयितुम्, नवा नवा भाषा अवगन्तुम् , नूतना नूतना गान-परिपाटीश्च कलयितुम् एधमान-महाभिलाष एष जनः ।

---

वास्तव्यः = निवासी । "वसेस्तव्यत् कर्त्तरि णिच्चे" ति तव्यत् । पर्याटयति = सर्वतो भ्रामयति । एधमानः = वृद्धिं गच्छन्, महान्, अभि-

---

अपजल खाँ—आप किस देश के निवासी हैं?

तानरंग—श्रीमन्, मैं राजपूताने का हूं ।

अपजल खाँ—ओह, आप राजपूताने के हैं ?

तानरंग—जी हाँ ।

अपजल०—यहाँ महाराष्ट्र देश में कैसे आना हुआ ?

तानरंग—सेनापति जी, मुझे देशाटन का शौक़ है, मैं देश-देशान्तर में पर्यटन करता रहता हूं ।

अपजल०—अच्छा, यह बात है, तो क्या आप अक्सर घूमते रहते हैं ?

तानरंग—जी, सेनापति जी, नूतन नूतन देश देखने, नवीन नवीन भाषाएँ जानने और अभिनव अभिनव गायन-शैलियों का अनुशीलन करने का मुझे बड़ा शौक है ।

